## अथ अश्वादधिगुणाः ।

वाजिजं समधुरं बलवर्णं
स्वेददाहमुपयाति विनाशम् (गुरुत्वम्) ।
दीपनीयमतिदोषलं सदा
चाक्षुषं च मरुतः प्रविकोपि ॥ ४९ ॥

## अथ औष्ट्रदधिगुणाः ।

वातार्शकुष्ठक्रिमिनाशनं स्यात्
औष्ट्रं विपाके कटुकं सतिक्तम् ।
सक्षारमम्लं कटु कुष्ठकोपि (कृमिकोष्ठनाशनं)
बल्यं च संतर्पणमाशुकारि ॥ ५० ॥

## अथ हास्तिनीदधिगुणाः ।

गुरु चोष्णं कषायं च कफमूत्रापहं च तत् ।

## अथ स्त्रीदधिगुणाः ।

स्निग्धं विपाके मधुरं बल्यं संतर्पणं गुरु ॥ ५१ ॥
चाक्षुष्यं सर्वदोषघ्नं दधिकात (नार्या) गुणोत्तमम् ॥ ५२ ॥
लघुणा [पा] के बलासघ्नं वीर्योष्णं पित्तनाशनम् ।
कषायानुगुणं नार्या दधि वर्चोविवर्धनम् ॥ ५३ ॥
कुर्यादुत्तयाभिलाषं च दधि मस्कपरिश्रृतम् ।
सतुक्षीरेण वज्ञातं गुरुवद्दधि तत्स्मृतम् ॥ ५४ ॥ (१)
(दध्नस्तु यदधस्तोयं तन्मस्तुनि परिश्रृतं ।
श्रृतात् क्षीराच्च यज्ञातं गुणवद्दधि तत्स्मृतम् ।)
वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम् ।

## अथ दधिखण्डगुणाः ।

दध्नः खण्डो गुरुर्वृष्यो विज्ञेयो बलवर्धनः ।
वस्त्रविचन (निष्पीडित) श्चापि कफपित्तविनाशनः ॥ ५५ ॥

## अथ असारदधिगुणाः ।

दधि त्वसारं रूक्षं च ग्राहि विड्भेदि (विष्टम्भि) वातलम् ।
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥ ५६ ॥

## अथ मस्तुगुणाः ।

तृष्णाक्लमहरं मस्तु [शीतं] [स्रोतो] विशोधनम् ॥
अम्लं कषायं मधुरं अवृष्यं कफवातनुत् ॥ ५७ ॥

## अथ दधिसामान्यगुणाः ।

अम्लं स्याद्रसपाकतो गुरुतरं वातापहं शीतलं
ग्राह्युष्णं ग्रहणीगदे निगदितं विण्मूत्रकृच्छ्रापहम् ।
बल्यं शोफकफाग्निमान्द्यजननं रक्तप्रदं शुक्रदं
[कासा] रूक्षारोचकपीनसे विषमके शीतज्वरे तन्मय [त] म् ॥ ५८ ॥
ग्रहण्यां पीनसे मूत्रकृच्छ्रे च विषमज्वरे ।
अरोचके च मन्दाग्नौ शस्यते दधि सर्वदा ॥ ५९ ॥
लवणमरिचसर्पिःशर्करामुद्गधात्री-
कुसुमरसविहीनं [नै] चैवमद्यात्तु नित्यम् ।
न च शरदि वसन्ते नोष्णकाले न रात्रौ
न दधि कफविकारे [पित्त] पीतरोगे न दद्यात् ॥ ६० ॥

एलासैन्धवशर्करं समरिचं धात्रीगुडं सर्पिषा
पथ्यं स्याद्वरमुद्गसूपसहितं संसेवनीयं दधि ।
नैवोष्णं बहु पिच्छलं न च शरद्ग्रीष्मे वसन्ते हितं
पित्तासृक्ज्वरकुष्ठदं भ्रमकरं (वी) वासर्पदं चान्यथा ॥ ६१ ॥
दधि त्रिकटुकमिश्रं राजिकाचूर्णमिश्रं
कफहरमनिलघ्नं चाग्निसंधुक्षणं च
तुहिनशिशिरकाले सेवनीयं च पथ्यं
भवति सुदृढकायो रूपवान् सत्ववांश्च ॥ ६२ ॥
(रचयति तनुदार्ढ्यं कान्तिमत्त्वं च नृणाम् )
सगुडदधि सुखोष्णं धौतवस्त्रेण सम्यक्
युवतिकरविलासैर्गालितं धूपितं च ।
शिशिरकिरणविश्वाजाजिचूर्णेन मिश्रं
कफहरमनिलघ्नं चाग्निसंधुक्षणं च ॥
(तुहिनशिशिरकाले सेवनीयं च पथ्यं ।
भवति सुदृढकायो रूपवान् सत्ववांश्च) ॥
अधिकतरविलासैः सेवितं मर्दितं च ॥ ६३ ॥
दधि तरुणमपथ्यं पथ्यसंपुष्टिहेतोः
बलकरमतिवृष्यं मेदकृद्दीपनं च ।
कफहरमनिले स्यान्नातिपित्तप्रकोपं
तदनिशमिह सेव्यं माधुरं चाम्लभावात् ॥ ६४ ॥
मधुरं भक्षयेच्चैतदत्यम्लं वर्जयेत्सदा ।
मधुरं दधि रोगघ्नं अत्यम्लं रोगकारकम् ॥ ६५ ॥

॥ इत्यायुर्वेदमहोदधौ सुखेन (षेण) कृते दधिवर्गः ॥

## ॥ अथ मस्तुगुणाः कथ्यन्ते ॥

[स्रो] श्रोतः शुद्धिं विधत्ते प्रकटयति रुचिं दीपयत्याशु वह्निं
कृत्वा शुद्धिं मलानां जरयति च हठाद्भुक्तमन्नं विचित्रम्
उष्णं चाम्लं कषायं लघु सुरभिरसं शूलविष्टम्भहारि
श्रेष्ठं मस्तु प्रशस्तं कफपवनरुजादुष्टमूत्रग्रहेषु ॥ १ ॥
लघ्वन्नं रुचिपक्तिदं क्लमहरं बल्यं कषायं सरं
भक्तच्छन्दकरं तृषोदरहरं प्लीहार्शशोफापहम् ।
वान्तौ शुद्धिकरं कफानिलहरं विष्टम्भशूलापहं
पाण्डौ मूत्रविकारगुल्मशमनं मस्तु प्रशस्तं लघु ॥ २ ॥
लघुत्वाद्दीपनत्वाच्च विष्टम्भाध्माननाशनात् ।
[स्रो] श्रोतःशुद्धिकरत्वाच्च ताक्राद्दधि (?) विकाश्यते ॥ ३ ॥

॥ इत्यायुर्वेदमहोदधौ मस्तुवर्गः ॥

## इदानीं तक्रगुणाः कथ्यन्ते ॥

घोलं मथितमुदश्वित्तक्रं चैतच्चतुर्विधं कथितम् ॥
सरसं निर्जलं स्वादु की(य)दम्भोवर्जितं मथितम् ।
(सरसं निर्जलमाद्यं निर्हृतरसमम्बुवर्जितं मथितम्)
[अर्ध] पादसलिलमुदश्वित्तदर्ध [पाद] जलं तक्रमाहुश्च ॥
प्रत्येकं च चतुर्णां कथा ज्ञेयाः प्रयत्नेन ॥ २ ॥
सरसं निर्जलं ज्ञेयं [घोलं] मथितं रसवर्जितम् ।
पादोदकमुदश्वित्तत्तक्रमर्धजलं भवेत् ॥ ३ ॥

## अथ गव्यमाहिषाजतक्रगुणाः ।

गव्यं तु दीपनं तक्रं मेध्यमर्शस्त्रिदोषजित् ।
माहिषं श्लेष्मलं तक्रं [छागं] लघु दोषत्रयापहम् ॥ ४ ॥
गुल्मार्शोग्रहणीशोफपाण्ड्वामर्थ [य] विनाशनम्

## अथ तक्रभेदानां गुणाः ।

घोलं मारुतपित्तहारि मथितं श्वासापहं श्लेष्महृत्
पित्तश्लेष्मविनाश्युदश्विदधिकं तक्रं त्रिदोषापहं ॥
मन्दाग्नावरुचौ तथैव नितरामन्येषु रोगेष्वपि
श्रेष्ठं तक्रमिदं वदन्ति मुनयस्तेनोत्तमं प्राणिनाम् ॥ ६ ॥

## अथ तक्रप्रशंसा ।

यथा सुराणाममृतं प्रधानं
तथा नराणां भुवि तक्रमाहुः ।
अम्लेन वातं मधुरेण पित्तं
कफं कषायेण निहन्ति सद्यः ॥ ७ ॥
वातश्लेष्मविनाशनं [कृमिहरं] कृच्छ्राश्मरीछेदनं
मूत्राघातहरं प्रमेहशमनं प्लीहार्तिगुल्मापहम् ।
दुर्नामोदरपाण्डुरोगजठरक्रूरार्तिनिष्कृन्तनं
तक्रं दीपनपाचनं लघुतरं पथ्यं सदा प्राणिनाम् ॥ ८ ॥
आमातिसारे च विशू [सू] चिकायां
वातज्वरे पाण्डुषु कामलेषु ।
प्रमेहगुल्मोदरवातशूले
नित्यं पिबेत्तक्रमरोचके च ॥ ९ ॥

तक्रं स्वादु कषायमम्लकरसं भक्षं (क्ष्यं) लघूष्णं हितं
गुल्मार्शःपरिणामशूलशमनं छर्दिप्रसेकापहम् ।
तृष्णारोचकमेहशोफगरजित् श्लेष्मालसघ्नं पयं (रं)
सेव्यं मूत्रगदापहं ज्वरहरं स्नेहोत्थपीडापहम् ॥ १० ॥
शीतकालेऽग्निमान्द्ये च कफोत्थे कामलासु च ।
मार्गावरोधे दुष्टौ च वाग्नौ (यौ) तक्रं प्रशस्यते ॥ ११ ॥
न (तत्) पुनर्मधुरं श्लेष्मप्रकोपनपरं परम् ।
वातघ्नं पित्तशमनंअम्लं चेत्पित्तकृत्सदा ॥ १२ ॥

## दोषविशेषे तक्रविशेषविधिः ।

वातघ्नं (तेऽम्लं) सैन्धवोपेतं स्वादु पित्ते सशर्करम् ।
कफपित्तेऽपि (पिबेत् कफेऽपि) वा तक्रं व्योषक्षारसमन्वितम् ॥ १३ ॥
स्थौल्यं करोति हरतेनिलमेतदेव
यन्नोष्णतामपगतं न कदाचिदेव ।
सर्पिः शि(सि)तामधुकमुद्गकषाययुक्तं
सेव्यं वसन्तशरदागमकालवर्जम् ॥ १४ ॥
नवनीतद्वारे मथितं कथयन्ति सुधियः ।
चिरमथितं पुनरुत्पत्तिकरं नरस्य दोषाणाम् ॥ १५ ॥

## रोगविशेषे तक्रनिषेधः ।

नैव तक्रं क्षते दद्यान्नोष्मकाले न दुर्बले ।
न मूर्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ १६ ॥

# तक्रप्रशंसा ।

शशिकुन्दसमप्रभशङ्खनिभं
युवतीकरनिर्मलनिर्मथितम् ।
परिपक्वसुगन्धिकपित्थरसं
पिब भो नृप तक्रं रुजापहरम् ॥ १७ ॥
मथितं गोरसं घोलं द्रवमस्तुविलोडितम् ।
श्वेतं दंडहतं सान्द्रं नामतः परिकीर्तितम् ॥ १८ ॥
द्विगुणाम्बुश्वेतमिदमर्धोदकमिति स्मृतम् ।
तक्रं त्रिभागभिन्नं तु केवलं मथितं स्मृतम् ॥ १९ ॥
तक्रस्योपरि यत्तोयमुदश्वित्परिकीर्तितम् ।
दध्नस्तूपरि यत्तोयं तन्मस्तु परिकीर्तितम् ॥ २० ॥
ग्राहिणी वातला रूक्षा दुर्जरा तक्रूर्जिका ।
तक्राल्लघुतरो मण्डः कूचिका दाधितक्रवत् ॥ २१ ॥
अकृत्वं गयतस्तक्रं क्रतुत्वेन शातक्रतुः (?) ।
तस्मात् त्रिविष्टपे जातं तक्रं शक्रस्य दुर्लभम् ॥ २२ ॥
कैलासे यदि तक्रमास्ति गिरिशः किं नीलकण्ठो भवेत्
वैकुण्ठे यदि कृष्णतामनुभवेदद्यापि किं केशवः ।
इन्द्रो दुर्भगताभयाद्विजयति(तां क्षयं द्विजपतिः) लम्बोदरत्वं गणः
कुष्ठित्वं च कुबेरको दहनतामग्निश्च दिव्यस्ति चेत् ॥ २३ ॥
यद्द्रव्यं शङ्खवर्णं हिमपटलनिभं चारुगंधः सुशीतं
गङ्गापानीयशुभ्रं युवतिकरमयस्फालनाज्जर्जरं च ।
मन्थानेनानुविद्धं करतलरभसाद्बुद्बुदाकारफेनं
तत्तक्रं सूपधूपं त्वमृतगुणनिभं भाग्यवन्तः पिबन्ति ॥ २४ ॥

॥ इत्यायुर्वेदमहोदधौ सुखेन (षेण) कृते तक्रवर्गः ॥

## ॥ अथ नवनीतवर्गः कथ्यते ॥

शीतं वर्णबलप्रदं समधुरं वृष्यं च संग्राहकं
वातघ्नं कफ(का)हारकं रुचिकरं हृद्यं त्रिदोषापहम्
(सर्वाङ्गशूलापहम्)।
कासाध्वश्रमशान्तिदं रतिकरं कान्तिप्रदं पुष्टिदं
सद्यस्कं नवनीतमुद्धृतमिदं स्यात्सर्वरोगापहम्।
(चक्षुष्यं नवनीतमुद्धृनवं गोःसर्वदोषापहम्) ॥
शीतं बलाढयं मधुराम्लवृष्यं
श्लेष्मा(व)पहं पित्तमरुत्प्रणाशम्।
शोकक्षयक्षीणकृशान्ति (ति) वृद्ध-
बालेषु पथ्यं नवनीतमुष्ण (क्त) म् ॥ २ ॥
गव्यं वा माहिषं वापि नवनीतं नवोद्धृतम्।
शस्यते बालवृद्धानां बलकृद्धातुवर्धनम् ॥ ३ ॥
शीतं वर्णबलप्रदं समधुरं वृष्यं हि संग्राहकं
हृद्यं श्वासजरापहं क्षयहरं पित्ताम्लवातापहम्।
कासार्शोदिन (ताप) शोफशमनं स्रस्ताङ्गपीडापहं
सद्यस्कं नवनीतमाहिषमिदं स्यात्सर्वरोगापहम् ॥ ४ ॥

॥ इति नवनीतगुणाः ॥

## ॥ अथातो घृतगुणाः कथ्यन्ते ॥

तत्रादौ गोघृतस्य गुणाः

धीकान्तिस्मृतिकारकं बलकरं मेधाप्रदं बुद्धिकृत्
वातघ्नं श्रमनाशनं स्वरकरं पित्तापहं पुष्टिदम्।

वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं च शीतं सदा
सेव्यं गव्यमिदं घृतं बलकरं सद्यःसमावर्तितम् ॥ १ ॥
सर्पिर्गवां चामृतकं विषघ्नं
चाक्षुष्यमारोग्यकरं च वृष्यम् ।
रसायनं मन्दमतीव मेध्यं
स्नेहोत्तमं च (गोः) विबुधा वदन्ति

## अथ माहिषघृतस्य गुणाः

सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिदं
वातश्लेष्मनिबर्हणं बलकरं वर्णप्रसादक्षमम् ।
दुर्नामग्रहणीविकारशमनं मन्दानलोद्दीपनं (?)
चाक्षुष्यं नवगव्यतः फल (पर) मिदं हृद्यं मनोहारि च ॥ २ ॥
माहिष्यं तन्मानुषणां च शस्तं
बल्यं वृष्यं बस्तिसादं करोति ।
मेदोद्भूतं मेहकृच्छ्रैत्यकारि
तस्मान्नित्यं सर्वकालं निषेव्यम् ॥

## आजघृतस्य गुणाः

दीपनीयमजासर्पिः चाक्षुष्यं बलवर्धनम् ।
कासश्वासक्षये वापि पथ्यं पानेषु तल्लघु ॥

# मेषीघृतस्य गुणाः ।

आविकं घृतमतीव गुरुत्वा
द्वर्ज्यमेव सुकुमारनरैश्च ।

# औष्ट्रघृतस्य गुणाः

सद्य एव बलपुष्टिकरं स्या
दुष्ट्रजं श्वयथुकासकरं च ॥

अन्यच्च

गव्यं च पाचितं सर्पिः वमिपीतकफापहम् ।
पयसोनुगुणं मेषां (षी) छागीगर्दभिकाघृतम् ॥ ७ ॥
औष्ट्रीघृतं वीर्यकटु श्लेष्मक्रिमिविषापहम् ।
दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ ८ ॥
पाके लघ्वादि (वि) कं सर्पिः न च पित्तप्रकोपनम् ।
कफेऽनिले योनिदोषे च श्वयथौ हतम् (शोफे कम्पे च तद्धितम्) ॥ ९ ॥
पाके लघुष्टं (घृष्णं) वीर्ये च कषायं कफनाशनम् ।
दीपनी (नं) लघु वीर्ये च विद्यादैकशफं घृतम् ॥ १० ॥

# स्त्रीघृतम्

चाक्षुष्यमग्निदं स्त्रीणां सर्पिः स्यादतमृोपमम् ।
वृद्धिं करोति देहाग्नेर्लघु पाके विषापहम् ॥ ११ ॥

# हस्तिनीघृतम्

कषायं बद्धविण्मूत्रं तत्कि (तिक्त) मग्निकरं लघु ।
करेणुजं हन्ति सर्पिः कष्टक्रिमिविशंकरम् (कफकुष्ठविषक्रिमीन्) ॥ १२ ॥

# सर्पिःप्रशंसा

आयुर्वृद्धिं वपुरपि दृढं सौकुमार्यं करोति
व्यायामस्त्रीनिधुवनकृतश्रान्तिविच्छेदनीनम् ।
पथ्यं बाल्ये वयसि तरुणे वार्धके चापि पथ्यं
नान्यत्किञ्चिद्भवति पुरुषे सर्पिषः स्थौल्यकारि ॥ १३ ॥

यद्वेदागमवेदिभिर्निगदितं साक्षादिहायुर्नृणां
यद्वैद्यैस्तु रसायनाय कथितं सद्यो जरानाशनम् ।
यत्सारस्वतकल्पकान्ति मतिमत्प्रोक्तं धियः सिद्धये
तत्रैकायनकेतकद्युतिचयप्रायं मुदा स्याद् घृतम् ॥ १४ ॥

वीर्यातिशीतं च गुणे विपाके
स्वादु त्रिदोषेषु रसायनं च ।
तेजोबलायुष्यकरं च मेध्यं
चाक्षुष्यमेतद् घृतमाहुरार्याः ॥ १५ ॥

ओजस्तेजोभिवृद्धिं जनयति सुखदं कान्तिकृत्सम्यगुक्तं
पापालक्ष्मीश्रमघ्नं श्वसनकसनहाऽजीर्णजातज्वरघ्नम् ।
शूलोदावर्तरोगग्रहणिनि च पजा (मदरुजं) नाशयत्याशु पित्तं [पीडां]
वातघ्नं पित्तनाशं स्वरहति भवे शूद्रमे (स्वरकरमगदं क्षुद्रमे)
चैवसेव्ये (व्यम्) ॥ १६ ॥

चाक्षुष्यं वृष्यमायुस्मृतिधृतिकरणं राजयक्ष्माप्रकोपं [विनाशं]
[ रूक्षे क्षीणे च पथ्यं वलिपलितहरं सामदोषप्रकोपे । ]
भूतोन्मादप्रमत्ते बहुतिमिरमदे कृत्पपश्चीर [स्यादपस्मार] हारि
सर्वेषां सर्वदैव प्रथितगुणगणं साधु पथ्यं घृतं स्यात् ॥ १७ ॥

सद्यस्कं कृमिपूतं [?] च मूत्रवस्ति विशोधनम् ।
श्लेष्मलं पित्तनाशं च बलपुष्टिविवर्धनम् ॥ १८ ॥
पुराणं तिमिरश्वासपीनसज्वरकासनुत् ।
मूर्छाकुष्ठविषोन्मदग्रहापस्मारनाशनम् ॥ १९ ॥
उग्रगन्धि पुराणं स्याद्दशवर्षोषितं घृतम् ।
लाक्षारसनिभं शीतं तद्धि सर्पग्रहापहम् ॥ २० ॥
मदापस्मारमूर्छायशिरःकर्णाक्षियोनिजान् ।
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ २१ ॥
अपस्मारग्रहोन्मादवतां शस्तं विशेषतः ।
पूर्वेक्ताश्चाधिकांस्ताश्च [?] गुणास्तदमृतोपमम् ॥ २२ ॥
निरामयानां नवयौवनानां
कृत्वा गवां यच्छत धौतमद्भिः ।
वह्नौ विपक्कं नवनीतनूनं [योग्यं]
योग्यं घृतं तद्गजराजसेविताम् [?] ॥ २३ ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते घृतवर्गः ॥

## ॥ इदानीं तैलगुणाः ॥

उष्णं विपाके कटुकं सतिक्तं
कफापहं वातनिवारणं च ।
क्रिमीन्निहन्याद्बलभुक्तकारि
तैलं क्रिमिश्लेष्ममरुत्प्रणाशि ॥ १ ॥
तिलतैलमलंकरोति केश्यं
मधुरं तिक्तकषायमुष्णतीक्ष्णम् ।

बलकृत्कफवातजं च [जन्तु] खर्जू
व्रणकण्डूतिहरं च [कान्ति] दायि ॥ २ ॥
कण्डूहरं कान्तिविवर्धनं च
अर्शो [वर्चो] विवृद्धि व्रणरोपणं च ।
तिलस्य जातं खलु यच्च तैलं
बालेषु वृद्धेष्वपि तैल [पथ्य] मेतत ॥ ३ ॥
न पित्तरोगे न च शोणितोत्थे
पथ्यं; महावातविकारसंधौ ॥
तिलोद्भवं तैलमुदाहरन्ति
वाताश्रितान् हन्ति समस्तदोषान् ॥ ४ ॥
कट्वम्लवीर्यं वहुपित्तकारि
विण्मूत्रसङ्गं कुरुतेऽतिदीप्तिम् ।
पामादिदोषापहरं च तैलं
अभ्यञ्जनं सर्षपसंभवं च ॥ ५ ॥
कटूष्णं सार्षपं तैलं कफशुक्रानिलापहम् ।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥ ६ ॥
आमवातगजेन्द्राणां शरीरवनचारिणाम् ।
एक एवाग्रणी [र्जे] हेता एरण्डस्नेहकेसरी ॥ ८ ॥
कौसुम्भतैलं क्रिमिनाशनं च
तेजोबलं नेत्रविनाशनं च ।
खर्जूश्च केशश्च करोति कोष्ठे [कण्डूं च करोति दृष्टेः]
त्रिदोषलं वापि समीरणघ्नम् ॥ ९ ॥
लेपात्करंजतैलस्य दृष्टिरोगविनाशनम् ।
कुष्ठे च पापभिन्ननां सर्ववातविकारनुत ॥ १० ॥

आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।
नाप्यु (त्यु) ष्णं निम्बजं तैलं क्रिमिकुष्ठरुजापहम् ॥ ११ ॥
क्षौमं स्नेहमचाक्षुष्यं पित्तकृद्वातनाशनम् ।
आक्षजं कफपित्तघ्नं केश्यं दृक्श्रोत्रतर्पणम् ॥ १२ ॥
अधोभागिकमैरण्डमन्येषां तिलवत्स्मृतम् ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते तैलवर्गः ॥

## अथ मधुगुणाः कथ्यन्ते ।

व्रणसा (शो) धनसंधानरोपणं वातलं मधु ।
रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ॥ १ ॥
त्रिदोषघ्नं मधु प्रोक्तं अन्यस्या श्रीसंनिपातलम् (?) ।
हिक्काश्वासकफच्छर्दिमदतृष्णाविषापहम् ॥ २ ॥
क्षौद्रं जलेन संयुक्तं (अति) स्थौल्ये पिबेन्नरः
कृशो भवति सत्याह (प्राहा) ल्लेखनं तत्र जायते ॥ ३ ॥
लेपे हितं तत्र गुदाङ्कुराणां
गजोद्भवं लेह्यमहोभिवृद्धिः (?) ।
सर्वो गुरुश्चापि रसायनानां
कासापहो वापि मधुप्रयोगः ॥ ४ ॥
मेहे हितं स्यान्मलछर्दिनाशः
हिक्कातिसारे व्रणकुष्ठहन्ता ।
कण्डूव्रणघ्नो व्रणदीपनानां (पीडितानां)
दिव्यामृतं साधु मधुप्रयोगः ॥ ५ ॥

स्थावरं जङ्गमं वापि कृत्रिमं च विषापहम् (विषंहरेत्) ।
वलीपलितनिर्मुक्तो देहे तस्मिन् प्रजायते ॥ ६ ॥
क्षतक्षीणे हितं चैव पाडुकामलरोगजित् ।
स्थूल कृष्णो (?) हितं चैव रक्ते वापि हितं च तत् ॥ ७ ॥
पाके स्वादु मधु श्रेष्ठं विपाके दोषसंयुतम् ।
(तन्मधु भूवि रुद्धानां वारीणां मदसंभवम् ॥ ८ ॥
संभवः क्रिमिकीटानां पिप्पली मधुना सह ।
अम्लेन मधुरं स्वादु तन्मधुश्चापि दोषकृत) (?) ॥ ९ ॥

## ॥ इदानीं इक्षुगुणाः कथ्यन्ते ॥

स्निग्धश्च संतर्पणबृंहणश्च
संजीवनः स्वादुरसः श्रमघ्नः ।
वृष्यश्च पित्तश्रमवातहारी
ह्यन्तर्विदाही कफकृत्सितेक्षुः ॥
तद्वत्सकृष्णो हि भवेद्गुणैश्च
वृष्यो भवेत्तर्पणदाहहन्ता ।
सक्षारकिंचिन्मधुरो रसेन
शोषापहन्ता व्रणशोफकर्ता ॥ २ ॥
पाण्डुको भीरुकश्चैव वाराहश्वेतपोनकः ।
कान्तारस्तापसेक्षुः स्यात्काष्ठेक्षुश्च विचित्रकः ॥ ३ ॥
नेपालो दीप्यथन्वश्च नीलयोरौप्यकोशकृत् ।

इत्येता जातयः स्थूला गुणान् वक्ष्याम्यतः परम् ॥ ४ ॥
सुशीतो मधुरः स्निग्धो बृंहणः श्लेष्मवर्धनः ।
अविदाहिगुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा ॥ ५ ॥
अन्ये तुल्यगुणाः केचित्सक्षारो वंशको मतः ।
वंशवच्छ्वेतपौण्ड्रस्तु किञ्चिदुष्णः स वातहा ॥ ६ ॥
कान्तारस्तापसेक्षुः स्याद्वंशकानुगतो मतः ।
एवंगुणस्तु काष्ठेक्षुः स तु वातप्रकोपनः ॥ ७ ॥
सूचीपत्रोनिलापोरोनीलापो (नेपालो) दीर्घपत्रकः ।
वातघ्नाः कफपित्तघ्नाः सकषायविदाहिनः ॥ ८ ॥
कोशाकरो गुडः शीतो रक्तपित्तक्षयापहा ।
अतीव मधुरो मूलो (ले) मध्ये मधुर एव च ॥ ९ ॥
अग्रेषु (ष्वा) मधुरो ज्ञेयः इक्षुरालवणः स्मृतः ।
कफकृच्चाविदाही च रक्तपित्तनिबर्हणः ॥ १० ॥
शर्करासमवीर्यस्तु दन्तनिष्पीडितो रसः ।
गुरुर्विदाही विष्टम्भी यान्त्रिकः परिकीर्तितः ॥ ११ ॥
एको (पक्को) गुरूरसः स्निग्धः सतीक्ष्णः कफवातनुत् ।
फाणितं गुरु मधुरं अभिष्यन्दि च बृंहणम् ॥ १२ ॥
शुक्रं कफकरं चैव पित्तघ्नं च विशेषतः ।
सक्षारो मधुरोऽतिमूत्रबहुलो रक्तस्य संशोधनो
मेदोनिग्रहणस्तु पित्तशमनो वातघ्नविष्टम्भनः ।
श्लेष्माणं जन (येत्) च बृंहणकरो बल्यः सदा स्वास्थ्यकृत्
वातघ्नो विषमोम्लपित्तशमनोऽसेव्योऽतिरेके सदा ॥ १३ ॥

## मत्स्यण्डिकादीनां गुणाः

मत्स्यण्डिकायाः खण्डः शर्करपाविमलोन्नरो दिग्धः (?)
गुरुरथ मधुरोत्तरोत्तरपाको वृष्यो रक्तपित्तविनाशकृत् ।
यावती शर्करा प्रोक्ता सर्वदाहप्रणाशिनी ।
रक्तपित्तप्रशमनी छर्दिमूर्छा तृषापहा ॥ १५ ॥
रूक्षो मधूकपुष्पोत्थः फाणितो वातपित्तकृत् ।
कफघ्नो मधुरः पाके विपाके वस्तिशोधनः ॥ १६ ॥
गुडशर्करया तुल्या वस्तिशोधनपाचनी ।
पित्तसंशमनी चैव रक्तपित्तनिर्बर्हिणी ॥ १७ ॥
मधुरा शर्करा चैव हिध्मातीसारनाशिनी ।
रूक्षा विच्छेदनी चैव कषाया मधुरापि च ॥ १८ ॥

## इक्षुप्रशंसा, तद्भेदाश्च ।

वृष्यः शीतोष्णपित्तं शमयति मधुरो बृंहणः श्लेष्मकारी ।
स्निग्धो हृद्यस्सरश्च श्रमशमनपटुर्मूत्रशुद्धिं करोति ।
मेदोवृद्धिं (विधत्ते) वर्धते शमयति च मलान् तर्पणं चेन्द्रियाणां
दंतौ नि (दन्तैर्नि) ष्पीड्य साक्षादमृतमयरसो (सं)
भक्षयेदिक्षुदंडः (डं) ॥ १९ ॥
कान्तारो रक्तवर्णः स्यात्कोशाकारस्तथैव च ।
श्वेतस्तु पौण्ड्रको ज्ञेयः त्रयः श्रेष्ठास्तथेक्षवः ॥
मधुरो मूलभावो (गे) स्यान्मध्ये मधुर एव च ।
अग्रभागे पुनस्तस्य इक्षोः स्याल्लवणो लघु ॥ २० ॥

भक्षयेदिक्षुकं काले भोजनस्याग्रतो नरः :
स्वभावान्मधुरोऽप्येष शुक्रो (भुक्ते) वातप्रकोपनः ॥ २१ ॥
विदाही विष्टम्भी गुरुरतितरां शोषशमनः
कषायोऽलंकुर्यात्पवनजनन छर्दिकरणः ।
धृतः किञ्चित्कालं सकलसहमूलाग्रदलना-
द्विदाही तेनायं भवति [न] हितो यान्त्रिकरसः ॥ २२ ॥
मूलमध्यदलनाच्च तत्क्षणात्सी [पी] यते यदि तु यान्त्रिको रसः ।
वातपित्तशमनस्तदा भवेत्तर्पगश्च मलमूत्रशोधनः ॥ २४ ॥

## गुडादीनां गुणाः ।

पित्तघ्नः पवनापहो रुवि [चि] करो हृद्यस्त्रिदोषापहः
संयोगेन विशेषतो ज्वरहरः संतापशान्तिप्रदः ।
विण्मूत्रामयनाशनोऽग्निजननः कण्डुप्रमेहांति [त] कृत
स्निग्धस्वादुरसो लघुः श्रमहरः पथ्यः पुराणो गुडः ॥ २५ ॥
दाहं निवारयति पित्तमपाकरोति
तृष्णां छिनत्ति विनिहन्ति च मोहमूर्छाम् ।
शोषं विघट्टयति तर्पयतीन्द्रियाणि
शीतः सदा समधुरः खलु सिद्धखण्डः ॥ २६ ॥
तृष्णामोहतृषास्यशोषशनी दाहज्वरध्वंसनी
श्वासच्छर्दिमदाय (त्ययक्लम) मलहरी हृद्या च संतर्पणी ।
क्षीणे रेतसि पावके च विषमे क्षीणे क्षते दुर्बले
दुर्वारेऽपि च रक्तपित्तकगदे सेव्या सदा शर्करा ॥ २७ ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते इक्षुवर्गः ॥

## ॥ इदानीं मद्यगुणाः कथ्यन्ते ॥

संदीपनं मद्यमतीव तीक्ष्णं
उष्णं च तष्टां (तृष्णा) प्रदपुष्टिदं च ।
सुस्वादु तिक्तं कटुकं तथाऽम्लं
जम्बूरसं सुस्वदनीयमेतत् ॥ १ ॥
काप्योपं ? रसभेदनं बलकरं मश्वासकासापहं
वर्ष्ये (वृष्यं) चैव लघूष्णदुष्टजरणं निद्राभिवृद्धिप्रदम् ।
पित्तासृक्कफसारके च विषमे कार्श्ये तथा पीनसे
रूक्षं श्रोत्र (स्रोत) विशोधनं रुचिकरं वातादिसंशोषणम् ॥ २ ॥
(श्लेष्माणं विनिहन्ति युक्तमनिशं सेव्यं सदा प्राणिना)
कृशे स्थूले हितं रूक्षं सूक्ष्मं श्रोतो (स्रोतो) विशोधनम् ।
वातश्लेष्महरं पुत्तया (युक्त्या) पीतं विषवदन्यथा ॥ ३ ॥
गुरुत्व (तद्) दोषजननं नवं, जीर्णमतोऽन्यथा ।
नात्यर्थतीक्ष्णमृद्वल्पसंभारं कलुषं न च ।

### अथ सुराया गुणाः ।

गुल्मोदरार्शोग्रहणीशोफहृत्स्नेहनी गुरुः ।
सुरानिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफाप (व) हा ॥

### अथ वारुण्या गुणाः ।

तद्गुणा वारुणी हृद्या लघुतीक्ष्णा निहन्ति च ।
शूलकासारुचिश्वासविबन्धाध्मानपीनसान् ॥ ६ ॥
ग्राह्युष्णानलदा रूक्षा पाचनी शोफनाशनी ।

## अथ पथ्याबिभीतकसुरा ।

नात्यर्थं प्रमदा लाघ्व्यां (घ्वी) यथा (पथ्या) बैभीतिकी सुरा ॥ ७ ॥
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ।

## अथ यवसुरा ।

विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ॥ ८ ॥

## अथ अरिष्टगुणाः ।

यथाद्रव्यगुणोऽरिष्टः सर्वंमद्यगुणाधिकः ।
ग्रहणीपाण्डुकुष्ठार्शःशोषशोकोदरज्वरान् ॥ ९ ॥
हन्ति गुल्मक्रि (मि) मी लोहः (प्लीह्नः) कषायकटुवातलः ।
मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥ १० ॥
क (अ) ल्पपित्तानिलं पाण्डुमेहार्शःक्रिमिनाशनम् ।
(सृष्ट) दृष्टिमूत्रस (श) कृद्वातो गौडस्तर्पणदीपनः ॥ ११ ॥
भृशोष्णतीक्ष्णरूक्षाम्लं हृद्यं रुचिकरं सरम् ॥ १५ ॥
दीपनं शिशिरस्पर्शं पाण्डुक्रिमिविनाशनम् ।
गुडेषु (क्षु) मधुमाध्वीकसूक्तं लघु यथोत्तरम् ॥ १६ ॥
कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम् ।
शाण्डाकी चासुते (तं) चान्यत् कालाम्लं रोचनं लघु ॥

॥ इति मद्यवर्गः ॥

## इदानीं काञ्जिकवर्गः ॥

धान्याम्लं भेदि तीक्ष्णं सुरभि लघुतरं शो (सो) ष्णसंस्पर्शशीतं
रूक्षं चैव क्लमघ्नं श्रमहरविषदं बस्तिसंशोधनं च ।
शस्तं वास्थापनं स्यात् लघु विषशमनं श्वासरोगापनोदि
गण्डूषो धारणे स्यान्मुखगदनिवहे गन्धनिर्नाशनं च ।
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम् ।
श्रमक्लमहरं रुच्यं दीपनं बस्तिशोधनम् ॥ १ ॥

इति काञ्जिकवर्गः ॥

## ॥ अथ मूत्रवर्गः ॥

औष्ट्रं (मूत्रं) गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।
( पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ।
कृमिशोफोदरानाहशूलपाण्डुकफानिलान् ।
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु । )
औष्ट्रं गोजाविनारं हयगजमहिषीमूत्रवर्गः खरोष्णा (राणां)
तिक्तं तीक्ष्णं लघूष्णं सलवणसुरसं पित्तलं भेदि रूक्षम् ।
हृद्यं रुच्यं क्रिमिघ्नं हुतवहजननं कुष्ठमेहौ विनाशी (शि)
गुल्मानाहार्शशूलानिलकफविषजित् शोफपाण्डूदरघ्नम् ॥
मूत्रं तथाष्टादशकुष्ठशोफपाण्डूदरोन्मादकफामयघ्नम् ।
सेव्यं निदर्शा (?) विकारमेतत् रूक्षं तथाम्लं क्रिमिषु प्रशस्तम् ।

॥ इति मूत्रवर्गः ॥

# ॥ अथ धान्यवर्गः ॥

स्निग्धो वातहरस्त्रिदोषशमनः पथ्यः सदा प्राणिनां
श्रेष्ठः पौष्टिक [श्रेष्ठो व्रीहिषु षष्टिकः] श्रमहरः कृच्छ्रादिदोषापहा ।
गौर (श्वा) श्वासितगौरतोऽपि नितरां सेव्यः करोत्युच्चकैः
शुक्र (शुक्रं) श्वासहरस्तथा श्रमहरः कासादिदोषापहा ॥ १ ॥

रसे पाके स्वादुः पवनकफपित्तोपशमनः
ज्वरेऽजीर्णे पथ्यः सकलजवरक्षामहरणः (?) ।
शिशूनां वृद्धानां युवतिसुकुमारातिस (सु) खिनां
अयं सेव्यो राजा भवति हि महाशालिरमलः ॥ २ ॥

धान्यं वापितमुत्तमं तदखिलं (छि) छिन्नोद्भवं मध्यमं
ज्ञेयं यदवर्गपित्तं (तद्यदवापितं) तदधमं निस्सारदोषप्रदम् ॥ ३ ॥

दग्धा यद्भविच्पेष्यं तेथ (?) विपिने यद्वापिताः शालयः
एते छिन्नभवा भवन्ति खलु ते विण्मूत्रबन्धप्रदाः ॥ ३ ॥

देशे देशे तु जाताश्च नानावर्णाश्च शालयः ।
तेषां स्वतः प्रधानोऽसौ त्रिदोषशमनः परः ॥ ४ ॥

रक्तो भीरुकपुंडरीककलमस्तूर्णो महापुष्पकः
दीर्घः काञ्चनहायनोऽसितशि (स्त्रि) तः पुष्पाण्डजः पाण्डुकः ॥
साराख्यास्तपनीयकाः शकुनको रोध्रस्तु सौगन्धिकः
धानाद्याः सपतङ्गिदूषकयुता हृद्याः शुभाः शालयः ॥ ५ ॥

सुसभाः (?) पाचनदीपना बलकरा स्निग्धास्त्रिदोषापहाः
शुक्रश्लेष्मविवर्धना रुचिकराः संदीपनास्तर्पणाः ।

पथ्याः सर्वगदे हिताः श्रमहराः क्षुत्तृड्श्रमध्वंसिनः
श्रेष्ठा व्रीहिषु षष्टिकाः कलप (म) का रक्ता महाशालयः ॥ ६ ॥
रोचनास्तर्पणा हृद्या दीप्तस्य (?) पाचनाः ।
गुरवो बृंहणाः पथ्या नानाजातीयशालयः ॥ ७ ॥
जगरोमधयेरो (?) हृद्यः स्वादुसंजीवनो लघुः ।
वृष्यो बलप्रदो हन्यात् सघृतोऽसौ मलत्रयम् ॥ ८ ॥
राजानं (न्नं) कफवातघ्नं स्वादु पित्तनिवारणम् ।
रूपशुक्रमहातेजःसत्वशुद्धिबलप्रदं ॥ ९ ॥
कृष्टि [ष्ण] शालि [स्ति] त्रिदोषघ्नो मधुरः कार्श्यहा तथा ।
पित्तघ्नः पिच्छलः शुक्ररूपवर्णबलप्रदः ॥ १० ॥
एते शालिगुणाः प्रोक्ता ज्ञातव्याः शास्त्रकोविदैः ।
सर्वं वनतृणानां (न्नं) च कुष्टरोगविनाशनम् ॥ ११ ॥
सर्वव्याधिहरं शीघ्रं मुखशोधनमेव च ।
धान्ये श्रेष्ठं षष्टिकं राजभोज्यं मांसे त्वाजं तैत्तिरीकं हितं स्यात् ।
पानीयं स्यात्कृष्णमृत्स्नासमेतं क्षीराज्यादौ गव्यमादौ प्रशस्तम् ॥

॥ इति शालिवर्गः ॥

उष्णारूक्षव (त) राः कषायमधुराः पाके लघुत्वादि (धि) काः
श्लेष्मघ्नाः पवनादिपित्तजनकाः विष्टम्भिनः सर्वदा ।
रोमाकादिकधान्यलक्षणमिदं प्रोक्तं नृणामग्रतः
सम्यक् वै बलशाकसद्रवगुल्छैः पश्चात्क्रमः संस्थितः ॥ (?)

॥ इति धान्यवर्गः ॥

## ॥ अथ शिम्बिधान्यगुणाः कथ्यन्ते ॥

तत्रादौ मुद्गगुणाः ।

मुद्गः पित्तकफापहो व्रणहरः कंचा (ठा) मयघ्नो लघुः
पथ्यो वातविरिक्तजन्तुषु तथा नेत्रामये सर्वदा ।
नैवाध्मानकरस्तथानिलहरो मन्दानि (व) ले शस्यते
सूपानामपि चोत्तमः स्वरकरो मूत्रामयच्छेदनः ॥

## अथ माषः ।

माषः स्निग्धो बलमलकरः शोषणः श्लेष्मकारी
वीर्ये चोष्णो झटिति कुरुते रक्तपित्तप्रकोपम् ।
हन्याद्वातं गुरुरतिरसो रोचको भक्ष (क्ष्य) माणः
स्वादुर्नित्यं श्रमसुखजुषां जीवनीयो नराणाम् ॥ १ ॥
माषो गुरुर्भिन्नपुरीषमूत्रः
स्निग्धोष्णवीर्योमधुरोऽनिलघ्नः ।
संतर्पणस्तन्यकरो विशेषात्
(बलप्रदः शुक्रकफावहश्च)
कषायभावान्न पुरीषभेदी
न मूत्रलो मे (नै) व बलासकर्ता (?) ॥
स्वादुर्विपाके मधुरोतिसान्द्रः
संतर्पणःस्तन्यरुचिप्रदश्च ।
माषैः समानं फलमात्मगुत्म (प्त) मूचुश्च काकाण्डफलं तथैव ॥

॥ इति माषगुणाः ॥

## अथ कुलत्थगुणाः

(उ) कृष्णःकुलत्थो रसतः कषायः ।
कटुर्विपाके कफमारुतघ्नः ॥
श्रुता (शुक्रा) श्मरीगुल्मनिषूदनश्च
संग्राहकः पीनसकासहारी ॥ १ ॥
आनाहमेदोगुदकीलहिक्का-
श्वासापहः शोणितपित्तकृच्च ।
कफस्य हन्ता नयनामयघ्नो
विशेषतो वन्यकुलित्थ (उ) युक्तः ॥ १ ॥

## अथ राजमाषगुणाः ।

राजमाषः सगे रुच्यः कफशुक्र (क्राम्ल) सपित्तकृत् ।
सुस्वादुर्वातलो रूक्षः कषायोऽपि महागुरुः ॥ ३ ॥
रूक्षः कषायो विषशोकशुक्र-
बलासदृष्टिक्षयवृद्धिकारी ।
कटुर्विपाके मधुरश्च शिम्बिः
प्रवृद्धविण्मूत्र (मा) रुतपित्तलश्च ॥ ४ ॥
सितासितः पीतकरक्तवर्णा
भवन्ति वै नैकविधास्तु शिबिं (म्ब्यः) : ॥

## अथ तिलगुणाः ।

ईषत्कषायो मधुरः सतिक्तो (क्तः)
संग्राहकः पित्तकरस्तथोष्णः ॥ ॥
तिलो विपाके मधुरो बलिष्ठः
स्निग्धो व्रणालेपनपथ्य उक्तः ॥

दन्त्योऽग्निमेधाजननोऽल्पमूत्रः
स्तन्योऽथ केश्योऽनिलहा गुरुश्च ।
तिलेषु सर्पिष्वसित [सर्वेष्वसितः] प्रधानो
मेध्यः सितो हीनतरस्तथान्यः ॥

दन्त्यो वर्णबलाग्नि [बुद्धि] जननः स्तन्योऽनिलघ्नो गुरुः
स्निग्धः पित्तकरोऽल्पमूत्रकरणः केश्यातिपथ्यो व्रणे ।
ग्राह्युष्णो धृतिकृत् कषायमधुरस्तिक्तो विपाके कटुः
कृष्णः पथ्यतमोऽसितोऽल्परहितो [गुणदः] हीनास्तथान्ये तिलाः ॥१॥

इति तिलः ॥

## ॥ अथ यवगुणाः कथ्यन्ते ॥

यवः कषायो मधुरो हिमश्च
कटुर्विपाके कफपित्तहारः ।
व्रणेषु पथ्यस्तिलवच्च नित्यं
प्रबद्धमूत्रो बहुवातवर्चा [र्चा]ः ॥ १ ॥

स्थैर्याग्निधातुस्वरवर्णकृच्च
सपिच्छलस्थूलविलेखनश्च ।
मेदोमरुत्तृट् [ड्] हरणो विरूक्षः
प्रसादनः शोणितपित्तयोश्च ॥ २ ॥

एभिर्गुणैर्हीनमतश्च नित्यं
विद्याद्यवेभ्योन्यथ [य] वानशेषैः ।

यवः कषायो मधुरः सशीतो मेहे हितः पित्तकफामयघ्नः ।
प्रसृष्टवर्चोऽन्ययवः सबल्यो बल्यश्च वृष्यश्च मले हितश्च ॥ ३ ॥
शीतः कषायः सुरसश्च रूक्षो
मेहक्रिमिश्लेष्मविषापहश्च ।
माधुर्ययुक्तो बलवांस्तथैव
पित्तापहो वेणुयवः प्रदिष्टः ॥ ४ ॥

इति वेणुयवः ॥

## अथ गोधूमगुणाः ।

गोधूम उक्तो मधुरो गुरुश्च
बल्यः स्थिरः शुक्ररुचिप्रदश्च
स्निग्धोऽ [ति] सि शीतोऽनिलपीतहारी [पित्तहन्ता]
संधानकृच्छ्राश्महरः सरश्च ॥ १ ॥
स्निग्धस्वादुरसो विपाकमधुरः प्रायेण चामाश्रयः
बल्यः शीतकरः सरो रुचिकरः संधानकारी गुरुः ।
शुक्रश्लेष्मविवर्धनो धृतिकरः पित्तानिलध्वंसकृत
गोधूमस्तु मनोहरः स्थिरकरः श्वेतो विकारापहा ॥ २ ॥

## अथ कुसुम्भगुणाः ।

कटुर्विपाके कटुकः कफघ्नो
विदाहको वातहरः कुसुम्भः ॥

# अथ सिद्धार्थकगुणाः ।

उष्णस्तथा स्वादुरसोऽनिलघ्नः
पित्तोल्बणः स्यात्कटुको विपाके ।
पाके रसे वापि कटुः प्रदिष्टः
सिद्धार्थकः शोणितपित्तकर्ता ॥ १ ॥
तीक्ष्णोष्णवीर्यः कफमारुतघ्न-
स्तथाविधश्चासितसर्षपोऽपि

# अथ आढकीगुणाः ।

[आढक्यः] कफमारुतप्रशमना वीर्येण चोष्णास्तथा
हृत्पृष्ठोदरमारुतामप [य] रुजामेदोरुजं कुर्वते ।
कासश्वासवमीतृषाज्वरहराः पथ्याश्च कण्डूरुजा
या [पा] माकुष्ठभगन्दरेषु न तथा रुच्यास्तु पथ्या भृशम् ॥ १ ॥
आढकी कफवातघ्नी ईषन्मारुतकोपिनी ॥ २ ॥
तस्यैताद्विदं [विधं] भोज्यं स्वादु विष्टम्भनं गुरु ।
दीपनं कफपित्तघ्नं सर्वमेहप्रणाशनम् ॥ ३ ॥
हृद्यं वासुखं दत्वा आढकी मुद्गपूषकः । [?] मूरीचैकढनं ॥ [?]

# मुद्गपू [यू] ष गुणाः ॥

ज्वरहरणबलाढ्यं रक्तपित्तप्रणाशं
विदधति निपुणास्ते मुद्गपू [यू] षं प्रशस्तम् ।
अनिलमपि निहन्ति स्नेहसंस्कारयुक्तं
शमयति तनुदाहं सर्वरोगेषु शस्तम् ॥ १ ॥

पित्तज्वरार्तिशमनं लघुमुद्ग [यू] पूषं
संतापहारि तदरोचकनाशनं च ।
रक्तप्रसादनमिदं यदि सैन्धवेन
युक्तं तदा भवति सर्वरुजापहारि ॥ २ ॥
व्यपगतमलदोषाः प्राणिनः क्षीणमात्रा
अधिकतरतृषार्ता ये च घर्मप्रतप्ताः ।
ज्वलनमुखविदग्धा येऽतिसाराभिभूताः
पुनरिहमनुजास्ते मुदुपू [यू] षस्य योग्याः ॥ ३ ॥

## कुलित्थपूष (यूष) गुणाः ॥

वीर्ये चोलाः [ष्णाः] कुलित्थाः कफपवनहराः पित्तरक्तप्रदाश्च
पाकेऽम्लाः श्वासकासोदरहृदयशिरोवस्तिशूलापहाः स्युः ।
मूत्राघातप्रमेहाश्मरिभृशदमनाः शुक्रविच्छेदनाश्च
श्रेष्ठा दुर्नामकुष्ठश्वयथुगुदयकृद्गुल्मतूनीगदेषु ॥ १ ॥

## मसूरपू (यू) षगुणाः ॥

मासूरा लघवोऽतिरूक्षविशदाश्चाक्षुष्यमूत्रापहाः
श्लेष्मापीन [पित्त] निबर्हणा रुचिकरा वातामयान् कारकाः ।
विष्टम्भं जनयन्ति कोष्ठधमने [नं] कृच्छ्राश्मरीछेदनं
सर्वे पित्तविकारजेषु [वि] हिता हृद्याश्च मासूर्यकाः ॥ १ ॥

## अथ कलायगुणाः ।

प्रसृ (भृ) तवा (तं) कुत (?) कुरुतेऽतिरूक्षः
कफापहः पित्तहरो नितान्तम् ।
रुचिप्रदो (दः) शूलकरो नराणां
आमानुबन्धी कथितः कलाप (य) : ॥ १ ॥

## ॥ अथ चणकगुणाः कथ्यन्ते ॥

रूक्षा वातकराः प्रमेहशमनाः कृच्छ्राश्मरीछेदनाः
विड्भेदं जनयन्ति पित्तशमना आध्मानरोगप्रदाः ।
कण्ठध्वंसहराः सुभक्षसुखदाः भुक्तारुचिच्छेदनाः
बल्या वर्णकरा विमुक्तचणकाः पुंसश्च नैते हिताः ॥ १ ॥

इति शुष्कचणकाः ॥

आर्द्रा वृष्यतमा बल्याः श्लेष्मला रुचिकारकाः
वातपित्तहराः शीता मूत्रकृच्छ्रनिवारणाः ॥ २ ॥

इति आर्द्रचणकाः ॥

लघवो भृष्टचणकाः श्लमक्लमकराः पराः ।
छर्दिघ्ना रोचना निद्रासुखपुष्टिबलप्रदाः ॥ ३ ॥

इति भृष्टचणकाः ॥

असितचणकयूषो दाहनाशं विधत्ते
प्रबलमहितलब्धं (?) सर्वमेहप्रणाशम् ।
दहनमरिचयोगाद्वातरोगापहारी
विदलजलविपक्वः सर्वदोषप्रयाति (णाशी) ॥ ४ ॥

इति कृष्णचणकाः ॥

पित्तघ्नाश्चणकाः श्वेताः श्लेष्मवातप्रकोप (णा) नाः ।
बलकृन्मलविष्टम्भमन्दाग्निश्चापि संयुतम् (?) ॥ ५ ॥
चणोदकं चन्द्रमरीचिशीतलं
प्रमेहपित्तास्रुजापहारि ॥
पुष्टिप्रदं तैल (नैज) गुणं हि पाके
संतर्पणं साधुजनमाधुरीयकम् (मञ्जुलमाधुरीकम्) ॥ ६ ॥

इति श्वेतचणकाः ॥

श्यामाकाः कोद्रवा येऽन्ये ये चान्येऽनु च शिम्बिकाः ।
अपथ्यास्ते न शंसन्ति [शस्यन्ते] सुखिनां निरुजां तथा ॥ १ ॥
यद्यज्जीर्यत्यतिक्षिप्रं तत्तल्लघुतरं स्मृतम् ।
यवगोधूममाषाश्च तिलाश्चापि नवा हिताः ॥ २ ॥

॥ इति धान्यवर्गः ॥

॥ शुभं भवतु लेखकवाचकयोः ॥ श्रीसाम्बसदाशिवाय नमः ॥

॥ श्रीरस्तु ॥

# अथ पक्वान्नगुणाः ॥

### गोधूमफेणिका ।

सलघुरुचिरकामा फेणिकातिप्रशस्ता
बलयति लघुजीरा छर्दिनाशं करोति ।
बदलविमुखमधं [?] चाम्लपित्ते विदाहं
जठरभरणयोग्या गोधुमैः संप्रयुक्ता ॥ १ ॥

## फेणिया ॥

गुरवो बृंहणाः स्निग्धा बल्याः शुक्रकराः पराः ।
स्त्रीषु हर्षं प्रयच्छन्ति माषपिष्टिकसंभवाः ॥ २ ॥

## गोधूमासांजीलाडुः ॥ [डुः]

तोयाज्येन विमर्दितं समसितं कृत्वा सुतप्तं तथा
खण्डाज्येन पचेद्धुताशनमृदौ कृत्वा सुबन्धं ततः ।
कर्पूरैर्मरिचैः ससैन्धवमथो शश्वच्चतुर्जातकैः
पुष्पालम्बमिति ब्रुवन्ति मुनयो नाम्ना महामोदकम् ॥ ३ ॥
वृष्यास्तु कन्दर्पकरा यथाग्नि
संवर्धिताः प्रीतिरुचिप्रदायकाः ।
वातं सपित्तं प्रहरन्ति भुक्ताः
सन्मोदका मोदकरा नराणाम् ॥ ४ ॥

मोदको गुरुरतीव वृष्यकः
श्लेष्मलश्चिरविपाकतस्तथा ।
मन्दमग्निं जनयेच्च कोष्टभृश्च (?)
मोदकोऽधिकबलप्रदः सदा ॥ ५ ॥

## अमृतफलम् ॥

शमयति बहु पित्तं श्लेष्मकोपं करोति
जनयति जठराग्निं वातरोगान्निहन्ति ।
सुरतजनितखेदं तत्क्षणादेव हन्या
दमृतफलमुदारं चारु शंसन्ति खे (वै) द्याः ॥ ६ ॥
शमयत्यर्शःकृच्छ्रान् हरति सवातं तथा पित्तम् ॥ ७ ॥

## कापूरपडीया ॥

रुच्या बल्या बलमलकरा हृद्यगन्धा स्थिरा च
तेजो वर्णं वपुषि कुरुते शुक्रवृद्धिं करोति ।
मेदोवृद्धिं जनयतितरां पित्तरोगे प्रशस्तं
सर्पिःपक्वागुरुमधुयुता एलया सम्प्रयुक्ता ॥ ८ ॥
कर्पूराद्या विदलनकरा राजयक्ष्मापहन्त्री
विश्वस्यैषा हितकरतमल्कादिनी (?) भक्षणीया ॥
घारिकिंडुरिकापूपवटिका वटकादयः ।
वृष्यका रोचका वल्या गुरवः स्युः स्वयोनिवत् ॥ ९ ॥

इन्द्रारिका ॥

## इन्द्रारिका ॥

वृष्या रोचनदीपनी बलकरी गुर्वी अभिष्यन्दिनी
प्राणैस्तर्पणकारिणी रसवती श्लेष्माणमाबिभ्रती ।
सात्रा (मा) नाहविबन्धगुल्मशमनी पित्तास्रविच्छेदिनी
स्नेहेनापि सुपूरिता च सततं (भक्ष्ये) क्ष क्षेयमिन्द्रारिका ॥

## घृतपूरम् ॥

घृतपूरं बलकरं वृष्यं मधुरशीतलम् ।
हन्ति वातं रक्तपित्तं श्लेष्मलं च विशेषतः ॥

## साडिया (भा०) ॥

क्षारखर्जूरिका स्निग्धा शुक्रमांसबलप्रदा ।
बल्या रतिकरा हृद्या छर्द्यरोचकनाशनी ॥

## ॥ क्षीरवटिका ॥

सुस्निग्धा वटिका च दुग्धमृदिता कान्त्यै च सौख्यप्रदा
तृष्णाशक्तिकरी श्रमप्रशमनी मन्दाग्नये दुर्जरा ॥
पित्तास्रं च विनाशयेत्तु सततं भक्ष्या सुपुष्टिप्रदा
प्रोक्तेयं वटिका घृतपुतकृता कामाग्निसंदीपनी ॥ १३ ॥

## तैलपक्वक्षीरवटिका ॥

सुस्निग्धाः क्षीरवटकाः कान्तिसौख्यबलप्रदाः ।
वातघ्नास्तैलपक्वास्ते वटका मांससंभवाः ॥ १४ ॥

## मुद्गवटकाः । (भा०)

मुद्गजातास्तु ये केचित् लघवो रुचिकारकाः ।

## चणकादिकृताः ।

दुर्जरा लघवो रूक्षाः चणकादिकृता मताः ॥ १५ ॥

## काञ्जीकवटकाः ॥

काञ्जिके रुचिनिक्षिप्ता वटका मांससंभवाः ।
वातघ्ना रोचका हृद्याः कफपित्तप्रकोपनाः ॥ १६ ॥

## राजिकाचूर्णसंस्कृतः ।

राजीचूर्णे विमिश्रः कफपवनहरो रोचनो दीपनः स्या-
न्मन्दाग्निध्वंसकर्त्ता मलविषशमनो जारयेत्सर्वमन्नम् ।
किंवा तोयैर्विमिश्रो गुडलवणयुतः पित्तरक्तादिहन्ता
तृष्णामूर्छालि [भि] घातज्वरपवनहरः क्षुद्ररोगस्य हन्ता ॥ १७ ॥
तक्रं कोमलशृङ्गबेरकलिकाकुस्तुंबुरीसंयुतं
युक्त्यावर्तितमर्धशोषमपरं भाण्डे सुधूपावृते ।
हवा [?] तक्रमनोहराश्च वटकास्तेषां रुचिं मार्दवं
स्वादं सौरभमुद्वहन्त्यहरहः तान्वेत्ति विश्वम्भरा ॥ १८ ॥

## अम्लवटकः ॥

अजाजीबाह्लीकार्द्रकमरिचासिन्धूत्थभरितः
सुपाकः स्वादीयान् दधिमथितताली विरचितः ।

कृतैलासंवासः क्वथितमथिते स्वैरमुषितः
विहन्ताऽसौ साक्षादरुचितरुजामम्लवटकः ॥ १९ ॥

## वटकप्रकाराः ।

कूष्माण्डार्धमरीचे सिंधूत्थमेथिकासहितैः ।
पिष्टैर्माषदलोत्थैर्विहिता वटकाश्च वटिकाश्च ॥ २० ॥

कोहलवडाः (भा०) ॥

## गोधूममण्डकाः ॥

श्लक्ष्णं गोधूमचूर्णं शरपिहितमुखं स्वादुतोयेन सिक्तं
संमर्द्य सुन्दरीभिर्घनपरिलुलितं गोलकं सूक्ष्मपिष्टैः ।
अन्तः पात्रे सुतप्ते करयुगरचिता मण्डकाः श्वेतदीर्घा
निक्षिप्ता भाजनेषु चिमिचिमिरमिताः पुष्टयन्तः सुसिद्धाः ॥ २१ ॥
ते भोज्या भक्तयुक्त्या परिस्रुतसहिता मुद्गयूषे विमिश्रा
आढक्यैर्वा मसूरैः घृतपिशितरसैर्जांगलानूपमांसैः ।
काले वासन्तपूर्वे प्रहरयुगमुखे भोजनं नित्यपथ्यं
रात्रौ क्षीराज्ययुक्ता सलिल (ललित) नरपतेर्भोजनं ग्रीष्मकाले ॥ २२॥
गोधूममण्डका रुच्या लघवश्चोष्णदीपनाः ।

## माण्डेपातिया (भा०) ॥

मण्डका मण्डिकाश्चैव पथ्या अंगारपाचिताः ॥ २३ ॥
अत्युष्णा मण्डका पथ्या अतिशीता गुरुः स्मृता ।

कुकूलकर्परभ्राष्ट्रकन्द्वाङ्गरे विपाचितान् ॥ २४ ॥
(एकयोर्नीह्लघून् विद्यादपूपानुत्तरोत्तरम् )
रक्तघ्ना पित्तकोपि च स्वादुर्मारुतनाशिनी । (?)
वृष्णी दीपनी वृष्या गोधूमांगारपाचिता ॥ २६॥ (? )

## अथ वटकादिभक्ष्याणां गुणाः ॥

वाह्लीजैर्मारिचैर्लवणपुडु (लालवणपृथु) तरैरार्द्रकैः पूर्णगर्भः
स्विन्नः स्वादुः सुगन्धिः परिमलबहुलः कोमलः कुङ्कुमाभः ।
क्षिप्तो दन्तान्तराले मुरुमुरुकुरुते व्यक्तशब्दं यथा वा
धन्योऽसौ यत्कपोले प्रविशति वटकः कान्तया प्रीतिदत्तः ॥ २७ ॥

कोरवडा (भा०) ॥

## दधिवटकाः ॥

शालिपिष्टदधिखण्डसंयुता दध्न एव वटकेषु कीर्तिताः ।
घोरवातशमना रुचिप्रदाः पित्तमप्यपहरन्ति दारुणम् ॥ २८ ॥

## चणकादिकृताः ।

दुर्जरं चणकादीनां वह्निमान्द्यकरं परम् ।
लघु रुच्याग्निजननं दद्यान्माषादिपूरणम् ॥ २९ ॥
मधुरं मधुराम्लं तत्तदेव प्रकरोति च ।
कफप्रकोपजननं चाणक्यं पूरणं स्मृतम् ॥ ३० ॥

## वेङ्गणी (भा०) ॥

गोधूमचूर्णघनवेष्टितमाषमुद्ग-
पिष्टं सुपक्कमिति वेष्टनिका वदन्ति ।

तां भक्षयेदतिबलां लभते (रमते) मनुष्य-
स्तैलेन वा सह घृतेन सुगन्धिना वा ॥ ३१ ॥
तावद्वर्गोऽत्र भक्ष्याणो (णां) स्वदते साध्यतेऽपि च ।
उष्णोष्णाः सर्पिषा स्नाता यावच्चाङ्गारपाचिताः ॥ ३२ ॥
गुडगोधूमयोर्मिश्रं तैलपक्वान्नभक्षणम् ।
करोति श्लेष्मपित्तं च मारुतं चापकर्षति ॥३३॥ तैलवडिया (भा०) ॥
लघवः पर्य (र्प) टा रुच्याः कफघ्नाः शालिसंभवाः ।
गुरवो रोचकाश्चैव शालिमुद्गादिसंभवाः ॥ ३४ ॥
शालिमुद्गपापड (भा०) ॥
विष्टम्भी पायसो बल्यो मेदःकफकरो गुरुः ।
कफपित्तकरी बल्या कृशराऽनिलनाशिनी ॥ ३५ ॥
तैले विपक्वा वटिकाश्च शालिभिः सुदुर्जरा रोचनभक्षणाश्च ।
कफप्रकोपं जनयन्ति सद्यो विशेषतः कूरवडा विशीर्णाः ॥ ३६ ॥
कूरवडाः (भा०) ॥
सक्तवो बृंहणा वृष्याः तृष्णापित्तकफापहाः ।
रुच्याः सद्यो बलकरा भेदिनः पवनापहाः ॥ ३७ ॥ सातू (भा०) ॥
संधानकृत्पिष्टमन्नं तण्डुलाः क्रिमिहेतवः ।
सुदुर्जरःस्वादुरसो बृहणस्तंडुलोद्भवः ॥ ३८ ॥ तण्डुलपीठ (भा०) ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते कृतान्नवर्गः ॥

## ॥ अथ फलानां गुणाः कथ्यन्ते ॥

## तत्रादौ दाडिमस्य गुणाः ॥

त्रिदोषशमनं पथ्यं वृष्यं मधुरशीतलम् ।
छर्द्यरोचकतृष्णाघ्नं शोफपित्तज्वरापहम् ॥ १ ॥

दाहशिक्तस्त (पित्तघ्र) शमनं सर्वरोगविनाशनम् ।
बलवर्णकरं हृद्यं सुपक्वं दाडिमीफलम् ॥ २ ॥
अत्यम्लं मधुरं कषायगुणभृद्विद्वद्भिरुक्तं रसे
वीर्ये संशमनं समीरणहरं पित्तापहं दीपनम् ।
किंचित्संग्रहणं कफस्य हरणं प्रायोऽपि पाके पुनः
प्रख्यातं रसवीर्यपाकविभवैरेवंगुणं दाडिमम् ॥ ३ ॥
दाडिमं द्विविधमीडितमार्यैरम्लमेकमपरं मधुरं च ।
तत्र वातकफहारि किलाम्लं तापहारि मधुरं लघु पथ्यम् ॥ ४ ॥
दाडिमं मधुरमम्लकषायं
कासवातकफपित्तविनाशि ।
ग्राहि दीपनकरं च लघूष्णं
शीतलं भ्रमहरं रुचिदायि ॥ ५ ॥

इति दाडिमम् ॥

## अथ द्राक्षागुणाः ॥

चक्षुष्या रक्तपित्तं शमयति मधुरा शीतवीर्या विपाके
स्वादुः स्निग्धा कषाया गुरुरति च तृषाशोषदोषापहन्त्री ।
द्राक्षा क्षीणरु (क्ष) तानामपहरति वमीश्वासकासज्वरार्ती-
स्तिक्तास्यत्वं मदं च प्रवरतरफलेषूत्तमा संप्रदिष्टा ॥ ६ ॥

सुपक्वा ॥

द्राक्षा सैव नु धातुवृद्धिजननी संतर्पणी दोषहृत्
तृष्णार्तिच्यवनी समीरशमनी छर्द्यामयध्वंसिनी ।
पाकेऽम्ला सुरसा रसे च मधुरा (शीता) शान्ता च वीर्येण सा
सा पक्वा विहिता ज्वरे च कफजे विण्मूत्रसंशोधनी ॥ ७ ॥

शीता पित्तास्त (स्र) दोषं शमयति मधुरा स्वादुपाकादि (ति) रुच्या
चक्षुष्या श्वासकासश्रमवमित्र (श) मनी शोषतृष्णाज्वरघ्नी ॥
दाहाध्मानश्रमादीनपनयति परा तर्पणी पक्वशुष्का
द्राक्षा सुक्षीणवीर्यानपि मदनकरा कोला (कलाकेलि) दक्षान् विधत्ते
इति द्राक्षा ॥ ॥ ८ ॥

# अथ मातुलिङ्गगुणाः ।

चक्र (त्वक्) तिक्ता कटुका कफक्रिमिहरा स्निग्धाऽनिलध्वंसिनी
मांसं बृंहणवातपित्तशमनं वृष्यं महादुर्जरम् ।
अम्लं केसरमग्निवृद्धिजननं सश्वासकासापहं
हिध्माछर्दितृषास्यजाड्यहरणं तन्मातुलिङ्गोद्भवम् ॥ ९ ॥
तिक्ता स्निग्धा भवति कटुका मातुलिंगस्य सा त्वक्
मध्यं स्निग्धं च (हरति) मधुरं बृंहणं वातपित्ते ।
मांसं भिन्नं (स्निग्धं) भवति लघु तत्केसरं कासहिध्मा-
श्वासश्लेष्मानिल जठरजिद् गुल्मशूल्मा (ला) निलघ्नम् ॥ १० ॥
सिन्धू (त्थे) च्छेन घनागमे (च) वसितया काले शरत्संज्ञके
हेमन्ते लवणार्द्रहिङ्गुमरिचैः सिद्धार्थचूर्णान्वितम् ।
एतैस्तैः शिशिरे मधावपि युतं ग्रीष्मे गुडेनान्वितं
वैद्यैर्भूमिप सालु (मातु) लिंगमुदितं सर्वर्तुसाधारणम् ॥ ११ ॥

# अथ जम्बीरम् ॥

जम्बीरमम्लं रसतो विपाके
वातापहं पित्तकफप्रदं च ।
अन्नस्य पार्वन्व (कं त्व) चिरेण कुर्यात
सुरोचनं वह्निविबर्धनं च ॥ १२ ॥

कटुकमधुरमम्लं सुप्रतीतं रसेषु
रुचिकरमुदराग्नेर्दीपनं वातहारि ।
निहत (हरति) कफसमीरौ पित्तमाहन्ति वीर्य-
करणफलमितीदं वातपित्तं विपक्वम् ॥ १३ ॥
( करणमपि न हृद्यं रक्तपित्तं तनोति । )
निम्बूफलं रोचकमग्निवृद्धिं
करोति पित्तं च सवातरक्तम् ।
अचाक्षुषं श्लेष्मकरं विशेषात्
भुक्तान्नपाकं कुरुते च सद्यः ॥ १४ ॥
निम्बुकं क्रिमिसमूहनाशनं
तीक्ष्णमम्लमुदरापहं स्मृतम् ।
वातपित्तकफशूलताहितं
नष्टधान्यरुचिरोचकप्रदम् ॥ १५ ॥

## अथ नारङ्गफलम् ॥

नारङ्गस्य फलं बलं च कुरुते सुस्वादु हृद्यं लघु
श्रेष्ठं वह्निकरं विदाहशमनं भुक्तान्नपक्तिप्रदम् ।
सर्वारोचकनाशनं श्रमहरं वातापहं पुष्टिदं
भुक्त्वापि प्रतिभक्षितं न कुरुते किंचिद्विकारं नृणाम् ॥ १६ ॥
ईषद्रसे मधुरशीतलमम्लतिक्तं
वीर्योद्गमाच्छमनदीपनपाचनं च
आवेदयति (?) कफपित्तहरं विपाके
नारङ्गकं फलमुदारधियो मुनीन्द्राः ॥ १७ ॥

## अथ मधुकर्कटी ॥

सुस्वादु पाके रसतश्चरक्त-
पित्तप्रकोपं विलयंति मांद्ये (?) ।
दाहज्वरं नाशयतीति नित्यं
प्राहुश्च वैद्या मधुकर्कटी च ॥ १८ ॥

## अथ मोचाफलम् ॥

मोचं स्वादुरसं विपाकमधुरं वीर्येण शीतं जडं
पित्तघ्नं त्वनिलापहं गुरुतरं पथ्यं न मन्देऽनले ।
सद्यो शुक्रविवर्धनं क्लमहरं तृष्णापहं शान्तिदं
दीप्ताग्नेः सुखदं कफामयहरं संतर्पणं प्राणिनाम् ॥ १९ ॥

## अथ नालिकेरीफलम् ॥

स्निग्धं स्वादुरसं विपाकमधुरं हृद्यं जरं(डं) दुर्जरं
पित्तघ्नं क्रिमिवर्धनं मदकरं वातामयध्वंसनम् ।
आमश्लेष्मविकोपनं प्रशमनं वह्नेर्भ्रमध्वंसनं
कन्दर्पस्य बलं ददाति नितरां तन्नालिकेरीफलम्

### नालिकेरोदकम् ॥

सुस्वादुवृष्यलघुदीपनरूक्षशीतं
तद्वातपित्तहरबस्तिविशुद्धिहेतुः ।
स्यान्नारिकेलसलिलं शशिकान्ति पथ्यं
पित्तज्वरस्य विषहारि वदन्ति वैद्याः ॥ २० ॥

# अथ भव्यफलम् ॥

भव्यं भव्यतरं स्वादु किञ्चिदम्लं सुरोचनम् ।
वातघ्नं मुखवैरस्यनाशनं वह्निदीपनम् ॥ २१ ॥

# अथ आमलकीफलम् ॥

करमर (?) हन्ति (वातं तदम्लत्वात्) वातदम्लं चात्पित्तं माधुर्यशैत्यतः।
कफं रुक्षकषायं (यत्वात् फलं धात्र्यास्त्रिदोषजित) ॥ २२ ॥
..... ..............................तथा
किंचित्स्वादुरसं विपाकमधुरं दोषत्रयध्वंसनम् ।
मूत्रव्याधिहरं प्रमेहशमनं विष्टम्भविच्छेदनम्
भुक्ताभुक्तहितं सदामृतरसं पथ्यं च धात्रीफलम् ॥ २३ ॥
रूक्षं स्वादु कषायमम्लकटुकं स्निग्धं सुसे (?, रोचनं
चक्षुष्यं बलवर्णदं धृतिकरं वृष्यं च बुद्धिप्रदम् ।
कण्डूकुष्ठविनाशनं ज्वरहरं तृड्दाहतापापहं
जातं किंबहुना ! त्रिदोषशमनं धात्रीफलं प्राणिनाम् ॥ २४ ॥
त्रिधाफले (धात्रीफलं) दिनं (तदुविनि) हन्ति मेहा-
नरोचकादीन् विविधान् विकारान् ।
अम्लं च (म्लत्व) माधुर्यकषायतः क्रमात्
दोषत्रयघ्नं लघु शीतवीर्यम् ॥ २५ ॥

## प्राचीनामलकफलम् ॥

पानी य ? मलकं (प्राचीनामलकं) वृष्यं स्वादु हृद्यं कफापहम् ।
शीतलं वृष (ष्य) मायुष्यं दाहज्वरहरं परम् ॥ २६ ॥

# अथ आम्रफलम् ॥

बालं पित्तकफास्रवातजननं बधा (द्धा)स्थि तादृग्विधं
पक्वं स्वादुरसं त्रिदोषशमनं क्षीणाङ्गपुष्टिप्रदम् ।
धातोर्वृद्धिकरं विपाकमधुरं संतर्पणं कान्तिदं
तृष्णाशोषनिवारणं रुचिकरं आम्नं (म्रं) फलेषूत्तमम् ॥ २७ ॥

सन्तर्पणीयः सकलेन्द्रियाणां
बलप्रदो वृष्यतमश्च हृद्यः ।
स्त्रीषु प्रहर्षं विपुलं ददाति
फलाधिराजः सहकार एव ॥ २८ ॥

आम्रं पाकस्य काले मधुरमिह रसेनेषदम्लं च हृद्यं
रेतोवृद्धिं विधत्ते शमयति पवनं पाचनं दीपनं च ।
आनन्दं संदधाति प्रतिदिशति बलं वीर्यतः सुश्रुताद्याः
विख्याताः सर्वलोके ह्यतिजनितकफं दुर्जरं कीर्तयन्ति ॥ २९ ॥

यत्कामिन्यधरोवृषं (ष्ठसं) भृतमिति ख्यातं विशिष्टैर्बुधैः
यद् दैत्यप्रमुखैः प्रयत्ननिरतैः कृष्टं सुरैः सागरात् ।
यन्नानारुचिभिः स्वभावसदृशं ख्यातं च मिथ्यैव तत्
पीयूषं विधिनाऽथ संशयहरं सृष्टं रसालात्मकम् ॥ ३० ॥

# अथ कपित्थफलम् ॥

आमं कण्ठहरं कपित्थमधिकं जिह्वाजडत्वप्रदं
तद्दोषत्रयकोपनं विषहरं संग्राहकं रोचकम् ।
पक्वं श्वासवमिक्लमश्रमतृषाहिध्मापनोदक्षमं
सर्वं ग्राहि विषापहं च कथितं सेव्यं ततः सर्वदा ॥ ३१ ॥

फणास (भा०) ॥

दुर्जरो मधुराम्लश्च वातपित्तप्रणाशनः ।
वातपित्तहरश्चैव गुरुर्मन्दाग्निकारकः ॥ ३२ ॥
मधुरा बृंहणी वृष्या पित्तला त्वक् त्रुटिप्रदा ।
पित्तघ्नी स्वादुहृद्या च मज्जेत्याहुर्गुणोत्तमाः ॥ ३३ ॥
कषायमधुरो रूक्षः कटुकः श्लेष्मकारकः ।
संग्राहिदुर्जरो जिह्वाग्राह्यकारी जडो गुरुः ॥ ३४ ॥ टेंबरु (भा०) ॥

## अथ करमर्दगुणाः ॥

करमर्दोऽतिमधुरः सुपक्वोऽम्लरसस्तथा ।
वातपित्तप्रशमनः श्लेष्मक्रिमिविनाशनः ॥ ६५ ॥ करवेंद (भा०) ॥

## अथ चिञ्चागुणाः ॥

अम्लिकायाः फलं पक्वं रक्तपित्तकरं परम् ।
त्वग्भस्म स्यात्कषायोष्णं कफजन्त्वनिलापहम् ॥ ३६ ॥ चिंचा ॥

## अथ भल्लातकगुणाः ॥

भल्लातकस्य त्वग्मांसं बृंहणं स्वादु शीतलम् ।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ ३७ ॥

बिंबदाम् (भा०) ॥

# अथ खर्जूरम् ॥

खर्जूरो रक्तपित्तं शमयति मधुरः स्वादुपाकोऽतिशीतः
तृष्णाशोषापहर्ता विषममदरुजाश्वासहिध्मापनोदी ।
स्निग्धो वृष्यो बलासं जनयति नितरां वह्निमान्द्यं विधत्ते
कान्तिं वै पुष्टियुक्त्या वपुषि समधिकं, मूत्रकृच्छ्रं निहन्ति ॥ ३८ ॥
पिण्डखर्जूरमध्यं च तादृगेव निगद्यते ।
विशेषादूर्ध्वगे रक्ते दाहे पित्ते च शस्यते ॥ ३९ ॥

# अथ सिंदीफलम् ॥

सिन्दोलं कफवातपित्तशमनं रक्तातिसारापहं
यामाकुष्ट (पामाकुष्ठ) भगन्दरामशमनं तीव्राश्मरीछेदनम् ।
हृद्रोगेषु हितं सदा बलकरं कामाग्निसंदीपनं
कासे क्षीणविरेचने ज्वरगते (दे) शस्तं च सिन्दीफलम् ॥ ४० ॥

# अथ सुवर्णकदलीफलम् ॥

सुवर्णमोचा कफपित्त [वात] हारिणी
विष्टम्भिनी दीपनकारिणी च ।
स्तदुर्जरं [सुदुर्जरा] दाहविघातनं [तिनी] च
रक्तं सपित्तं प्रशमं च [शमयेत] निश्चितम् ॥ ४१ ॥

उतती (भा०) ॥

ईषत्कषाया मधुरा वातपित्तनिबर्हणी ।
बल्या वृष्या च हृद्या च विशेषादुतती गुरुः ॥ ४२ ॥

## अथ पिप्पलफलं ॥

अश्ववत्थवृक्षस्य फलानि पथ्या-
न्यतीव हृद्यानि सुशीतलानि ।
निघ्नन्ति पित्तं सह शोणितेन
दाहं तृषां छर्दिमरोचकं च ॥ ४३ ॥
[कुर्वन्ति पित्तास्रविषार्तिदाहतृट्छर्दिशोपारुचिदोषनाशं]

## उदुंबरफलम् ॥

औदुम्बरं फलमतीव सुशीतलं च
सद्यो निवारयति शोणितपित्तमुग्रम् ॥ ४४ ॥

## अथ उम्बीफलम् ॥

मूत्रावरोधं कुरुतेऽतितीव्रं
विशेषतो रक्तसमीरणं च ॥

## अथ राजकोशातकीफलम् ॥

सुराजकोशातकि पित्तघाति
महागदे शोपमदात्यये च ।
श्रमक्लमे मेहभगन्दरे च
व्रणेषु पित्तेष्वपि नित्यपथ्यम् ॥ ४५ ॥

## अथ सिराकोशातकीफलम् ॥

सिराकोशातकी पित्तहरी क्षुत्तृड्विनाशनी ।
मेहे हिता सदोष्णापि पित्तच्छर्दिविनाशनी ॥ ४६ ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते फलवर्गः ॥

## अथ शाकवर्गः ॥

फलं पर्य्यागतं शाकमाशुष्कं तरुणं नवम् ।
पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ॥ १ ॥
शाकं षड्विधमुद्दिष्टं सर्वं विद्याद्यथोत्तरम् ।
सर्वशाकमजाह्येयमवाकजूपम पैरुषम् [?] ॥ २ ॥
अन्यत्रैव सुमध्यस्थकालशाकपुनर्नवा [?] ॥

## अथ तण्डुलीयकगुणाः ॥

शीतो रूक्षो लघुरतितरां पित्तरक्तापहन्ता
स्वादुः पाके भवति च रसे स्वादुरेवातिहृद्यः ।
हन्ति व्याधीन् विषमविषजान् श्लेष्मवातप्रकोपं
सद्यो मज्जामयविघटनस्तण्डुलीयोऽतिपथ्यः ॥ ३ ॥
रसे विपाके मधुरोऽतिशीतो
रूक्षस्तुषारः कफनाशनश्च ।
सदाहपित्तं रुधिरं विषं च
विशेषतो हन्ति च तण्डुलीयः ॥

## अथ वास्तुकचिल्लीशाकं ॥

वास्तूकोऽग्निकरो रसे च मधुरः पित्तापहश्चाक्षुपः
स्निग्धो वातविनाशनः क्रमिहरः कुष्ठादिदोषापहः ।
[व] चर्चोमूत्रविशोधनः प्रमथनः श्लेष्मामयानां तथा
शाकानामपि यो [चो] त्तमो लघुतरः पथ्यः सदा प्राणिनाम् ॥ ५ ॥

वास्तुकेषु च सर्वेषु शस्यते कठवास्तुकः ।
चिल्लिर्वास्तुकवज्ज्ञेया तता न्यूना च किंचन ॥ ६ ॥
सक्षारः क्रिमिजित्त्रिदोषशमनः संदीपनः पाचनः
चाक्षुष्यो मधुरः सरो रुचिकरो विष्टम्भिशूलापहः ।
वर्चोमूत्रविशोधनः स्वरकरः स्निग्धो विपाके कटुः
वास्तूकः, सकलामयप्रशमनी चिल्ली तथैवोत्तमा ॥ ७ ॥

चिल्लिताकवला (भा०) ॥

# अथ शिग्रुशाकं ॥

कफस्य वातस्य शमं करोति
उष्णं च पित्तं कुरुतेऽग्निदीप्तिम् ।
हृद्यं क्रिमिघ्नं च सुरोचकं च
आध्मानविड्बन्धविनाशनं च ॥ ८ ॥ [शिग्रुशाकं]

# अथ राजिका ॥

राजिका कफसमीरणहन्त्री
रोचनाग्निजननी च विहृद्या ।
कंच हृद्यमिव [कण्ठरुक्क्रिमिवि] नाशनकर्त्री
उष्णवीर्यमुपहन्ति च शूलम् ॥ ९ ॥

मद्गरीया [भा०] ॥

# अथ शतपुष्पा ॥

शतपुष्पामवातघ्नी शूलगुल्मोदरापहा ।
दीपनी च विशेषेण किंचित्पित्तप्रकोपिनी ॥ १० ॥

## अथ कुस्तुम्बरी ॥

सुगन्धिर्वातपित्तघ्नी लघ्वी रुच्या ज्वरे हिता ।
व्यञ्जनालङ्कृतिः शीता साऽऽर्द्रा कुस्तुम्बरी स्मृता ॥ ११ ॥

## अथ राजवल्ली ॥

बल्या वृष्या च कण्ठ्या कफपवनहरा स्यात् त्रिदोषे प्रशस्ता
लघ्वी मूत्रातिघातप्रशमनवमनी स्यात्तथा कृच्छ्रहन्त्री ।
पित्तोद्रेके च रक्ते विषमविषहरी दीपनी शाकश्रेष्ठा [ वर्या ]
पत्राणां राजवल्ली फलमरुलसलानाप्रवृद्धिं [ ? ] करोति ॥ १२ ॥

## अथ कुसुम्भी ॥

दृष्टिप्रसादं कुरुते विशेषाद्
रुचिप्रदं दीप्तिकरं च वह्नेः ।
विण्मूत्रदोषापहरं मलघ्नं
कौसुम्भशाकं प्रवरं वदन्ति ॥ ॥ १३ ॥

## अथ सार्षपम् ॥

अत्युष्णवीर्यं कुरुतेऽग्निदीप्तिं
रक्तं सपित्तं त्वथ कण्ठरोगम् ।
अचाक्षुषं शुक्रकरं विदाहि
न सार्षपं शाकमिदं हि पथ्यम् ॥ १४ ॥

# अथ वार्ताकम् ॥

॥ सदाशिवम् (?) ॥

सक्षारं कफपित्त (वात) हारि मलकृद्वह्नेस्तु संदीपनं
तिक्तोष्णं मधुरं तथा कटुरसं त्वीषच्च पित्तप्रदम् ।
हृद्यं वातविकिं न मद्यपथ्यमपि तत् द्रव्ये व सर्वे पुनः (?)
(हृद्यं रुच्यमपित्तलं कफमरुज्जित्सर्वशाकोत्तमं)
वार्ताकं परिपूर्णजातसरसं बालं न पक्वं हितम् ॥ १५ ॥
वार्ताकं कफवातघ्नं किंचित्पित्तप्रकोपनम् ।
सरसं मूत्रलं प्रोक्तं बलकृद्बालमेव तत् ॥ १६ ॥
लवणमरिचचूर्णेनादृतं रामठाढ्यं
दहनवदनपक्वं जम्बुकान्तं नितान्तम् ।
हरति पवनमाद्यं श्लेष्महन्तृ प्रसिद्धं
जठरभरणयोज्यं चारु भोज्यं भरीतम् ॥ १७ ॥ वृन्ताक भरितं

# अथ बिम्बीफलम् ॥

बिम्बीफलं स्वादु शीतं स्तम्भनं लेप (ख) नं गुरु ।
पित्तास्रदाहशोफघ्नं वाताध्मानविबन्धकृत् ॥ १८ ॥ बिम्बीफलम् ॥

# अथ कर्कोटीफलम् ॥

तिक्तं सुतीव्रं मधुरं तथाम्लं
वातापहं पित्तविनाशनं च ।
श्लेष्माकरं चेतनपातनं (दीपनपाचनं) च
कोटीभवं चाग्निकरं नराणाम् ॥ १९ ॥

कर्कोटिकाफलं गुल्मशूलपित्तकफापहम् ।
त्रिदोषमेहकुष्ठघ्नमीषन्मधुरतिक्तकम् ॥ २० ॥
कासश्वासज्वरं हन्ति मारुतघ्नं परं लघु ॥ कंकोडा भा० ॥

## अथ मूलकगुणाः ॥

किंचित्क्षारं सतिक्तं कटुकरसयुतं मूत्रलं दोषहारि
श्रेष्ठं गुल्मक्षये च प्रबलतरमहाश्वासकासामयेषु ।
कण्ठ्यं श्रेष्ठं स्वराणामपहरति रुजं नेत्ररोगापहारि
स्यादेवं बालमूलं महदपि च हितं स्निग्धपाकं (पक्वं) समीरे ॥ २१ ॥
॥ मूला भा० ॥

## अथ सूरणः ॥

रुच्यो दीपनपाचनः क्रिमिहरो मन्दानलोद्दीपनो
हृद्यः श्लेष्मकरो लघुर्बलकरो दुर्नामनिर्नाशनः ।
अक्षाणामपि पाटवं प्रकुरुते सश्वासकासापह-
श्चाक्षुष्योऽपि च (सू) स्तरणः स्मृतिकरो हृत्पार्श्वशूलापहः ॥ सूरणः ॥

## अथ भूकन्दः पिण्डालुश्च ॥

भूकन्दस्त्वतिवातलो बलकरः श्लेष्माणमत्यर्थकृत
विष्टम्भी गुरुमेदसोपि विषमो वातामयान् कारकः ।
मेहं कुष्ठरुजं करोति सततं तद्वातरक्तं हरेत
पिण्डालुः कृमिकोष्ठकृच्छ्रमपहृत पित्तामयध्वंसकः (योत्तेजनः)
॥ पिंडालुः ॥

## अथार्द्रकं ॥

आर्द्रं दीपनपाचनं रुचिकरं वृष्यं कटूष्णं वरं
सर्वं मेदकरं कफामयहरं शोफापहं शूलजित् ।
जिह्वाकण्ठविशोधनं सलवणं पथ्यं सदा भोजने
निम्बूतोयविमर्दितं कफहरं संदीपनं सारणम् ॥ २४ ॥
निम्बुसामुद्रसंयुक्तमार्द्रकं त्वस्रपित्तनुत् ।
दीयनीयं रुचिकरं हृद्यं दोषत्रयापहम् ॥ २५ ॥ ॥ आर्द्रकम् ॥

## अथ कुमुदोत्पलपद्मकन्दगुणाः ॥

कुमुदोत्पलपद्मानां कन्दा मारुतकोपनाः ।
कषायाः पित्तशमनाः विपाके मधुरा हिमाः ॥ २६ ॥
हृद्याः कफहराः कन्दाः कटुकाः पित्तकोपनाः ।
मेहकुष्ठक्रिमिहरा वृष्या बल्या रसायनाः ॥ २७ ॥
कुमुदोत्पलपद्मानां कन्दा गुणकरा हिमाः ।
मधुराश्च कषायाश्च पित्तासृग्दाहनेरिताः (नाशनाः) ॥ पद्मकन्दः ॥

## अथ मृणालगुणाः ॥

शीतलं रक्तपित्तघ्नं दाहज्वरहरं परम् ।
मृणालनालं वृष्यं च तृष्णाच्छर्दिविनाशनम् ॥ २९ ॥ कमलनालः ॥

## अथ शृङ्गाटकगुणाः ॥

शृङ्गाटकः शोणितपित्तहारी
लघुः सरो वृष्यतमो विशेषात् ।
नृ (ति) दो (ष) तापत्रयशोषहन्ता
रुचिप्रदो मेहनदाहहेतुः ॥ ३० ॥

## अथ वारिकशेरुकगुणाः ॥

हन्त्यस्रपित्तमरुचिं वमिमोहदाहं
तृष्णामदक्लमहरं मधुरं च शीतम् ।
कण्ठास्यशोषशमनं गुरु रक्तपित्ते
क्षीणे च पथ्यमति वारिकशेरि (रु) कं स्यात् ॥ ३१ ॥

## अथ वर्जनीयकन्दकीर्तनं ॥

बालं ह्यनार्तवं जीर्णं विद्धं तु कृमिभक्षितम् ।
कन्दं च वर्जयेत्सर्वं यो वा सम्यङ्न रोहति ॥ ३२ ॥

## अथ कलिङ्गगुणाः ॥

सर्वदोषहरं हृद्यं पथ्यं रेतोविकारिणाम् ।
दृष्टिशुक्रक्षयकरं कलिङ्गं कफवातजित् ॥ ३३ ॥ ॥ कलिङ्गं ॥

## अथ कूष्माण्डगुणाः ॥

वृष्यं वर्णकरं बलोपजननं पित्तापहं वातजित्
मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीछेदनम् ।

विण्मूत्रग्लपनं (?) तृषाऽऽर्तिशमनं क्षीणाङ्गपुष्टिप्रदं
कूष्माण्डं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः ॥ ३४ ॥
मूत्रावरोधशमनो बहुमूत्रकारी
कृच्छ्राश्मरीप्रशमनो विनिहन्ति पित्तम् ।
पथ्यः संशोणितसमूबल (सशोणितसमुल्बण) पित्तरोगे
तृष्णाऽपहं त्रिषु शमन (समं त) मुदाहरन्ति ॥ ३५ ॥

## अथोर्वारुकगुणाः ॥

ए (उ.) र्वारुकं पित्तहरं शुशीतं
मूत्रामयघ्नं रुचिकारकं च ।
सुस्वादु दाहोपशमं प्रशस्तं
पित्ते च रोगे कफरोगवर्ज्यम् ॥ ३६ ॥
वालुकानि च सर्वाणि दुर्जराणि गूजणि (गुरूणि) च ।
मन्दाग्निं च प्रकुर्वन्ति रक्तपित्तकराणि च ॥ ३७ ॥ वालुक भा० ॥

## अथ सिन्धणी ॥

सिन्धणी वातशमनी वृष्या मधुरशीतला ।
रक्तपित्ते च दाहे च पित्तार्तीनां प्रशस्यते ॥ ३८ ॥ सेंधणी भा० ॥

## अथ चिल्लीकाकमाचीप्रभृतीनां गुणाः ॥

चिल्ली (ल्ली) वास्तुकवद् हृद्मा (द्या) संग्राही गुरुवातला ।
काकमाची त्रिदोषघ्नी चाङ्गेरी कफवातहृत् ॥ ३९ ॥

वातहृद् दीपनी पंजी भारंगी नालिचाष्टकौ (?) ।
मधुरौ कफपित्तघ्नौ कौसुम्भं सर्वरोगहृत् ॥ ४० ॥

मूलकं दोषकृच्चामं पक्वं वातकफापहम् ।
राजिका पित्तला वातकफघ्नस्तण्डुलीयकः ॥ ४१ ॥

वर्षाभूर्वातपित्तघ्नी सिद्धार्थः कफवातहृत् ।
कृमिपित्तकफध्वंसी दीपनः कासमर्दकः ॥ ४२ ॥

कर्कोटकं सवार्ताकं पटोलं कारवेल्लकम् ।
अष्ट (कुष्ठ) मेहज्वरश्वासकासमेदःकफापहम् ॥ ४३ ॥

सर्वदोषहरं ज्ञेयं कूष्माण्डं बस्तिशोधनम् ।
राजकोशातकीतुम्बीफलमत्युग्रपित्तहृत ॥ ४४ ॥

त्रपुसं वातलं वातश्लेष्मलं पित्तनाशनम् ।
कालिङ्गं तुच्छकं वातपित्तहृच्च कशेरुकम् ॥ ४५ ॥

## अथ शाकसंस्कारकद्रव्यनिरूपणम् ॥

शुंबी (शुण्ठी) मरीचपिप्पल्यः कफवातहरा मताः ।
गुल्मशूलविबन्धघ्नो हिङ्गुर्वातकफापहः ॥ ४६ ॥

पचानी (यवानी) धान्यकं जीवं (बीजं) वातपित्तकफापहम् ।
सौवर्चनं (लं) विबन्धघ्नं सैन्धवं च त्रिदोषहृत् ॥ ४७ ॥

एतैस्तु संस्नुतं पक्वं भृष्टं व्यञ्जनसौरभम् ।
पेयाऽऽदिकं च कम्पादीन् सर्वदोषान् व्यपोहति ॥ ४८ ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते फलशाकवर्गः ॥

॥ अथेदानीं शिखरिणी कथ्यते ॥

अर्धाढकं सुचिरपर्युषितस्य दध्नः
खण्डस्य षोडश पलानि शशिप्रभस्य ।
सर्पिः पलं मधु पलं मरिचं द्विकर्ष
शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् (=चतुर्जातकस्य) ॥
श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टा
कर्पूरचूर्णसुरभीकृतचारुसंस्था ।
एषा वृकोदरकृता मु (सु) रसा रसाला
चास्वादिता भगवता मधुसूदनेन ॥ २ ॥
त्रिंशत्पलानि दध्नश्च त्वगेलाऽर्धपलं तथा ।
मध्वाज्यस्य पलार्धं च (र्धार्धं) मरीचानां (चैला) पलार्धकम् ॥ ३ ॥
पलान्यष्टौ च खण्डस्य पटे शुद्धेऽवधार (गाल) येत ।
कर्पूरवासिते भाण्डे छायायां स्थापयेदिदम् ॥ ४ ॥
एषा शिखरिणीत्युक्ता प्रदीप्ता बलवर्धनी ।
आयुःप्रवर्धनी चैव सर्वरोगप्रमर्दनी ॥ ५ ॥
(नाश) सान श्येत्तृड्रुजास्थौल्यं नराणां सर्वदा हिता ।

## ॥ द्वितीया शिखरिणी ॥

कपित्थमातुलुङ्गैलासारिवार्धक (?) बीजकैः ।
शर्कराशुण्ठिसामुद्रमुद्गचूर्णैः सुसंयुतैः ॥
सदा पथ्या नियुञ्जयाच्च (द्राध्व) क्षीणे देहे च पुष्टिदा ॥ ७ ॥

सुजातं दध्नि भेदं च (निक्षिप्तं) वस्त्रे बद्ध्वा सुपीडितम् ।
नानापुष्पफलारम्भं कुर्याद् दध्नि मनोहरम् ॥ ८ ॥
सूक्ष्मं दधिरसं श्रेष्ठं तद्भूतं शोधिते पटे ।
लवणेन समं युक्त्या शिखरिण्यमृतोपमा ॥ ९ ॥
रसाला सर्वदोषघ्नी रक्तपित्तनिबर्हणी ।

## ॥ अन्या शिखरिणी ॥

सन्मातुलिङ्गस्य दलं त्वगेलां
सरंगपिप्पल्यी ससमं (?) सितया समेतम् ॥
व्योषाच्च गद्याणयुगप्रयुक्तं
स्याद्वार्तकं (?) दृष्टिसमं सितवस्त्रबद्धम् ॥ १० ॥
कर्पूरवासाच्च तथैव पश्चा-
द्युक्त्या च संमर्द्य कृता रसाला ।
एषा कृता शिखरिणी सुरसा रसाला
सुषेणदेवेन रथाश्वहेतोः ॥ ११ ॥
आस्वादिता शिखरिणी परमेश्वरेण
दोषांश्च सर्वान् विनिहन्ति वोग्रान् ।
पित्तास्त्ररक्ता (सृगुत्था) नपि हन्ति सर्वान्
भोज्यानि सर्वाण्यपि जारयन्ति ॥ १२ ॥

## ॥ अमृतप्राशशिखरिणी ॥

नारङ्गं दाडिमं स्यात्पलमधुकयुतं मातुलुङ्गस्य तोयं
द्राक्षातोयं समांशं गुडदधिसहितं शर्कराऽजाजिमिश्रम् ।

(श्रेष्ठा पानेषु वृष्या सित) श्रेष्ठो पादे च वृष्यात्सम रिचयुता
सैन्धवैर्वापितं त-
न्निष्पीड्यं सर्वमेतत् कुरु (रचय) शिखरिणां राजयोग्या
यतस्ताः ॥ १३ ॥

अन्यच्च ।

मातुलुङ्गसिताऽजाजीमरीचार्द्रकनागरैः ।
कर्पूरसहितैर्युक्त्या दधिपर्युषिताः समाः ॥ १४ ॥
रसं योगेषु सर्वेषु बदरस्य समस्य च ।
नागरं रससंमिश्रं रसालैषाऽमृतोपमा ॥ १५ ॥
अच्छे पटे च संघृष्टा रक्तपित्तनिबर्हिणी ॥

## ॥ चन्द्रामृतस्राविणी नाम शिखरिणी ॥

मातुलिङ्गकपित्थाम्लतिन्तिडीकाम्लदाडिमैः ।
शर्करासहितैर्युक्तं दधिपिष्टं शुचौ पटे ॥ १६ ॥
योजितं मरिचाजाजीचातुर्जातकभूस्तृणैः ।
भुक्ता चार्द्रकसंयुक्ता रसालाऽमृतसंभवा ॥ १७ ॥
सर्वरोगप्रशमनी दाहपित्तनिबर्हणी ।
रक्तोद्रेकहरी पथ्या सर्ववातानुलोमनी ॥ १८ ॥
एषा शिखरिणी प्रोक्ता सुषेणेन विनिर्मिता ।

॥ अन्यच्च ॥

अग्र्या दधिगुडाजाजीनागरार्द्रकयोजिता ॥ १९ ॥

सुचतुर्जातघृष्टा च रसालैषाऽमृतोपमा ।
सर्वकृच्छ्रप्रशमनी सर्वातीसारनाशनी ॥ २० ॥
पित्तोद्रेकहरी पथ्या पित्तातीसारनाशनी ।
सुषेणदेवेन कृता रसाला ह्यमृतोपमा ॥ २१ ॥

॥ इति सुषेणकृते शिखरिणीवर्गः ॥

## अथ व्यञ्जनवर्गः ॥

हिङ्गूषणाजाजिमहौषधानि
चूर्णीकृतानि त्रिगुणं क्रमाच्च ।
सदीप्यकं सूरणपूष (?) मांस-
रसप्रयोगेषु च नित्यमिष्टम् ॥ १ ॥
यवानिजीरके तुल्ये तयोर्द्विगुणसूरणम् ।
ईषत्युष (?) समायुक्तं ततो व्यञ्जनसौरभम् ॥ २ ॥
सर्वरोगहरं पथ्यं वातदुर्नामनाशनम् ।
शुण्ठीमरीचपिप्पल्यः समं नागविचूर्णिताः ॥ ३ ॥
चव्यचित्रककापित्थसारयुक्तं सुसंस्कृतम् ।
सैन्धवेन समोपेतं तक्रपीतं च यत्र चित ॥ ४ ॥
एतद्धै व्यञ्जनं श्रेष्ठं सर्ववातनिवारणम् ।
महागुल्मप्रशमनं सुषेणेन कृतं नृणाम् ॥ ५ ॥
सर्ववातामये शस्तं नृणां भेषजमुत्तमम् ।

॥ अन्यच्च ॥

मरीचं दीप्यकं शुण्ठी चव्यं चित्रकमेव च ॥ ६ ॥

पिप्पलीपिप्पलीमूलधान्याकाजाजिसैन्धवम् ।
जीरकं दाडिमं पथ्या चामलं हृद्यगन्धकम् ॥ ७ ॥
एतत्कल्पसमं मिश्रं पक्त्वा तक्रे सपिण्डके ।
वातश्लेष्महरा हृद्या परमा रुचिवर्धिनी ॥ ८ ॥
आमातीसारशूलघ्नी वातगुल्मनिकृन्तनी ।
कासश्वासहरा चोग्रा मन्दा मेदायिनी (?) परा ।
उक्ता चैव सदा पथ्या सोत्तमा कठिना स्मृता ॥ १० ॥

## क्थिका (भा०) ॥

मरिचजरणशुण्ठीपिप्पलीमूलचव्यं
दहनरुचकधान्यं पिप्पली सैन्धवं च ।
अत्रपकपित्थसारं दाडिमिकाजि (?) हिंगु-
र्युवतिकरसुपक्कं आमलक्यं सुतक्रम् ॥ ११ ॥
हरति पवनमाद्यं श्लेष्मदाहं सकृच्छ्रं
अरुचिजठरशूलं चामवातातिसारम् ।
विदितसकलवेद्यो वैद्यराजः सुषेणोः
विरचयति कपित्थव्यञ्जनं राजगोप्यम् ॥ १२ ॥

॥ अन्यच्च ॥

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
करमथितकपित्थं चित्रकं पिप्पली च ।
समधृतकृतचूर्णं तत्र संयोजितव्यं
क्थितमिह समानं योजितं रामठेन ॥ १३ ॥

कृतलवणसुधान्यं मातुलुङ्गस्य सारं
कफपवनविकारे सर्वदा व्यञ्जनं स्यात् ।
वातेऽग्निमान्द्येऽपि च शूलमान्द्ये
मूर्छां निगृह्णाति चिरप्रवृद्धाम् ॥
सुषेणदेवेन कृता रसाला
सुसौरभा रोगहराऽपि पथ्या ॥ १४ ॥

॥ इति श्रीसुषेणकृते व्यञ्जनवर्गः ॥

॥ इदानीं मांसगुणाः कथ्यन्ते ॥

मांसं स्वादुमतां वरं सुबलकृत् स्नेहाधिकं देहिनो
नित्यं धातुषु साम्यकृच्च कथितं तद् वर्णकृद् बृंहणम् ॥
भुक्तं तृप्तिकरं च कामकरणं वातादिदोषान् हरेत्
तस्मादाङ्गिकदोषशान्तिकृतये भुञ्जीत मांसं सदा ॥ १ ॥

## अथ लावमांसगुणाः ॥

लावा हिमस्वादुकषाययुक्ता
वृष्याग्निकृत् स्निग्धलटी (?) प्रहृद्याः ।
संग्राहिका वै कटुपाचिताश्च
ते संनिपातेषु हिताः समस्ताः ॥ २ ॥ ॥ लावरू (भा०) ॥

## अथ कृष्णातित्तिरिगुणाः ॥

ईषद्गुरूष्णो मधुरोऽतिवृष्यो
मेधाग्निसंवर्धनकारकश्च ।
बल्यो विहन्यात्स कफज्वरांश्च
वातामयाद्यान् शितितित्तिरिश्च ॥ ३ ॥ ॥ कृष्णतित्तिर (भा०) ॥

## अथ गौरतित्तिरिः ॥

गौरस्तित्तिरिकोऽग्निकृत्कफहरो रूक्षोऽतिपित्तापहः
श्लेष्माणं विनिहन्ति चैष बलवान् रक्तं च पित्तं जयेत् ।

## अथ कापिञ्जलः ॥

सोऽसृक्पित्तहरोऽतिशीतललघुर्बल्योऽतिवृष्यः सदा
वाते स्यान्मृदुकुष्ठहृत् कृमिहरो मेहामयध्वंसनः ।
क्षीणे रेतसि मेदसाऽग्निजननः कापिञ्जलः शस्यते
वातासृग्विलयं करोति तरसा पित्तामयध्वंसकः ॥ ४ ॥

## अथ वार्तकगुणाः ॥

पाण्डुप्रमेहपिडिकाकृमिसंभवेषु
रोगेषु वातबहुलेषु च शस्यते च ।
वातास्रपित्तकफजान् विनिहन्ति कीलान्
गुल्माग्निमान्द्यमरुचिं लघु वार्तकं च ॥ ५ ॥

## अथ क्रकरोपचक्रिकागुणाः ॥

लघुश्च वृष्या च बलोपबृंहणी
हृद्या तथा क्रकरोरुचक्रिया (सक्रकरोपचक्रिका) ॥

## अथ मयूरमांसगुणाः ॥

काषायं कटुकातिवृष्यजननं सुस्वादु केण्यं (कण्ठ्यं) तथा
सक्षारं रुचिकारकं विषहरं मन्दानलध्वंसकम् ।
(स्वर्यं) श्वर्यं मेध्यमतीव हृष्टिजननं श्रोत्रेन्द्रिये दार्ढ्यकृत्
स्निग्धोष्णानिलहास्रपित्तशमनं मायूरमांसं सदा ॥ ७ ॥
हेमन्तकाले शिशिरे वसन्ते
सेव्यं हि मायूरमुशन्ति मांसम् ।

## अथ कुक्कुटमांसगुणाः ॥

उष्णः स्वादुतरो बलस्वरकरो वृष्यः सदा बृंहणः
पाके स्निग्धतरो महाऽनिलहरो मेदःकफालस्यकृत् ।
आयुष्यं कुरुते क्षयेषु विषमे मेहे वमौ शस्यते
प्रोक्तः कुकुटको हि दोषशमनः सर्वामयध्वंसकः ॥ ९ ॥

## अथ कपोतादिगुणाः ॥

कपोतपारावतभृङ्गराजा
जटी कुलिङ्गं गृहजं पिकश्च ।
भेदाशिडिंडीशुकसारिवाल्-
काखञ्जरीटा हरिताः प्रशस्ताः ॥ १० ॥
कषाया मारुता रूक्षाः फलाहारा मरुचराः ।
पित्तश्लेष्महराः पित्ता (प्रोक्ता) बद्धमूत्राल्पवर्चसः ॥ ११ ॥

सदा दोषकरस्तेषां भेदाशी मलदूषकः ।
काषाया लवणा हिमाः कफकरा वृष्याः सदा दुर्जरा
विष्टम्भं जनयन्ति मूत्रबहुलं पित्तास्यदाहान् किल ।
आमाध्मानकरास्त्रिदोषजनना मोहास्यवैरस्यकाः
कृच्छ्राग्नेर्बलकारकाः श्रमहराः दौर्गन्ध्यदाः श्लेष्मलाः ॥ १२ ॥
एते प्रावृषि सेविताः प्रतिदिनं दोषव्रजघ्नाः खलु ।
आकाशगामिनः सर्वे बल्या वृष्याः सुदुर्जराः ॥ १३ ॥

## कौलिङ्गगुणाः ॥

कौलिङ्गो मधुरोऽतिवृष्यकफकृच्छ्रुक्राश्मरीछेदनः
पित्तास्रातिहरोऽतिशुक्रजननः स्निग्धास्यमाधुर्यकृत् ।
बल्यो मारुतनाशनः कृमिहरो वार्यश्च नेत्रामये
दुर्नामप्रशमी विशेषपवनध्वंसी सदा दुर्जरः ॥ १४ ॥

## ग्राम्याणां गुणाः ॥

ग्राम्या वातहराः सर्वे बृंहणाः कफपित्तलाः ।
मधुरा रसपाकाभ्यां दीपना बलवर्धनाः ॥ १५ ॥

## कपोतगुणाः ॥

कापोतः स्याद्गुरुरतिहिमः स्निग्धमन्दः प्रकोपी
श्लेष्मा पित्ते प्रणयविजरा जर्जरा चं चदनात् [?] ।
रेतःक्षीणे श्रमहरवरः कृच्छ्रमूत्रे निदाघे
मोहे योज्यः स भवति नृणां कायकारी बलाय ॥ १६ ॥

## अथ जाङ्गलमासगुणाः ॥

जाङ्गलं वस्तिदोषघ्नं गुरु पीनसनाशनम् ।
लघुपाकं न शीतं च नातिस्निग्धमदाहि च ॥ १७ ॥

## अथाजाविमांसगुणाः ॥

[ नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम् ]

शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।
बृंहणं मांसमौरभ्रं पित्तश्लेष्मावहं गुरु ॥ १८ ॥

## अथैणमांसगुणाः ॥

ऐणं मांसं च हृद्यं बलकरमपि तत्पित्तरक्तं निहन्ति
पाण्डुक्षीणे सदाहे कफपवनरुजो नाशयत्याशु कीलान् ।
प्लीहानाहौ विबन्धं ज्वरहरणपरं मेदसोऽन्तं करोति
रेतःक्षीणेषु योज्यं रुचिकरणलघु श्वासकासं छिनत्ति ॥ १९ ॥
मेदः पुच्छोद्भवं स्यात्कफपवनहरं कान्तिदं पुष्टिदं स्यात्
वातासृक्पित्तकृत्स्यान्मदहरविषहृच्छ्वासकासं छिनत्ति ।

## अथ शशकमांसगुणाः

(बल्यं वि) बलाभिष्यन्दि तत्स्यात् ज्वरहरणपरं क्षीणरेतःप्रधानं
शस्तं वातामयानां शशकजपिशितं हन्ति कुष्ठामयांश्च ॥ २० ॥

## अथौष्ट्रादिमांसगुणाः ॥

औष्ट्रं सलवणं मांसं मांसमेकशफोद्भवम् ।
अल्पाभिष्यन्दि वर्गोऽयं जाङ्गलः समुदाहृतः ॥ २१ ॥
ढुले: ? जलपातनिलयादूरपानीयगोचराः ।
ये मृगाश्च विहङ्गाश्च महाभिष्यन्दना मताः ॥ २२ ॥

## अथ वनचारिणां गुणाः ॥

माधुर्याद् गुरुवोऽतिरूक्षदहनाः शोषे मदोत्थे विषे
श्रेष्ठा मूत्रपुरीषला बलकराः कासार्शनाशप्रदाः ।
वातं पित्तरुजो हरन्ति सततं स्निग्धाश्च कार्श्यापहाः
सर्वे ते वनचारिणः कफहरा मेहे हिताः सर्वदा ॥ २३ ॥

## अथ मांसानां गौरवलाघवविचारः ॥

नादेया गुरवो मध्ये यस्मात्पुच्छास्यचारिणः ।
सरस्तडागजानां तु विशेषात् सारसो लघुः ॥ २४ ॥
अदूरगोचरा यस्मात्तस्मादुत्सोद पादलाः (?) ।
किंचिन्मुक्ताः शिरोदेशे अत्यर्थं गुरवस्तु ते ॥ २५ ॥
अधस्ताद्गुरवो ज्ञेया मत्स्याः सरसिजाः स्मृताः ।
उरोविचारणास्तेषां पूर्वमङ्गं लघु स्मृतम् ॥ २६ ॥
शिरः स्कन्धः कटिः पृष्ठं सक्थिनी चाम आशयः ।
गुरु पूर्वं विजानीयाद्धातस्तुपथात्तरम् (लघवस्तु यथोत्तरं) ॥ २७ ॥

सर्वेश्च प्राणिनां देहे मध्यो गुरुरुदाहृतः ।
पूर्वभागो गुरुः पुंसामधोभागस्तु योषिताम् ॥ २८ ॥
उरोग्रीवं विहङ्गानां विशेषेण गुरु स्मृतम् ।
पक्ष्योक्ष्ये पाज्यमाहृष्टो (?) मध्यभागस्तु पक्षिणाम् ॥ २९ ॥
अतीव मांसं रूक्षं च विहङ्गानां पलाशिनाम् ।
बृंहणं मांसमत्यर्थं खगानां पिशिताशिनाम् ॥ ३० ॥
मत्स्याशिनां पित्तकरं वातघ्नं धान्यचारिणाम् ।
जाङ्गलानूपगा ग्राम्याः क्रव्यादैकशफास्तथा ॥ ३१ ॥
प्रसहा बिलवासाश्च यथासंघातसंशिताः (?) ।
प्रतुदा विष्किराश्चैव लघवः स्युर्यथोत्तरम् ॥ ३२ ॥

## अथ वाराहमांसगुणाः ॥

दुर्नामानिलदोषहं कृमिहरं वाराहमांसं सदा
स्निग्धं स्वेदनवृष्यशीतबलकृद् हृद्रोगसंवर्धकम् ।
कासश्वासहरं प्रमेहशमनं हिक्काऽनिलध्वंसकं
चाक्षुष्यं तु विदाहि च श्रमहरं वाराहमांसं सदा ॥ ३३ ॥

## अथ शङ्खकूर्मादिगुणाः ॥

शङ्खकूर्मादयः स्वादुरसपाका मरुत्प्रदाः ।
स्निग्धाः शीता हिताः पित्ते वर्चःश्लेष्मविवर्धनाः ॥ ३४ ॥
कृष्णकर्कटकस्तेषां बल्यः को (सो) ष्णोऽनिलापहः ।
शुक्लः सन्धानकृत्सृष्टविण्मूत्रोऽनिलपित्तहा ॥ ३५ ॥

# अथ मत्स्यगुणाः ॥

नादेया मधुरा मत्स्या गुरवो मान्द्यतापहाः ।
रक्तपित्तकराः सोष्णा वृष्याः स्निग्धाल्पवर्चसः ॥ ३६ ॥
कषायानुरसस्तेषां शिष्यः (श्रेष्ठः) शैवालभोजनः ।
रोहितो मारुतहरो नात्यर्थं पित्तकोपनः ॥ ३७ ॥
मत्स्या द्वेधा दुद्वपन्नैंद्वम्वु (?) जाता
स्तस्मात्पूर्वे पञ्चधा कल्पनीयाः ॥
नद्याः कौपाः सारसा वैद्युतोत्था-
स्ताडागोत्थाः सागरोत्थास्तथा स्युः ॥ ३८ ॥

# अथ ऋतुभेदेन मत्स्यविशेषाणां हितत्वम् ॥

ऋतुः प्रभै (ऋतौ मधौ) निर्झरिषु प्रजाता
मत्स्या हिता ग्रीष्मऋतौ च चौद्याः ।
तडागजाः प्रावृषि सर्व एव
स्निग्धा बलिष्ठाश्च सृजन्ति दोषान् ॥ ३९ ॥
शरदृतौ निर्जरि (झर ?) जाश्च कूपजा
हिता हि मत्स्याः शिशिरेऽब्धिजाताः ॥
(शिशिरे सारसा मत्स्या वसन्ते ह्रदसम्भवाः ।
ग्रीष्मे तु चौण्ड्यजा मत्स्याः प्रावृट्काले तडागजाः ॥ ४० ॥
शरदि नैर्झरा मत्स्याः हेमन्ते कूपसम्भवाः)
षट्कूलो नदिकावर्तो ग्रही लघुतरः स्मृतः (?) ।

# अथ स्थानानुसारेण मत्स्यानां गुणाः ॥

सरस्तडागसंभूताः स्निधाः स्वादुरसाः स्मृताः ॥ ४१ ॥
कौप्या वृष्या वातहृच्छ्लेष्मलाश्च
गुल्माष्ठीलानाहकुष्ठप्रदाः स्युः ।
ताडागमत्स्यो गुरुर्बृंहणीयः
तथा च शीतो वृषदोऽतिमूत्रः ।
ताडागवन्निर्झरजाश्च मेध्या
चत्तू (?) स्थिरायुष्यबलप्रदाश्च ॥ ४३ ॥
मम तद् श्रु (महासरस्सु) बलिनः स्वल्पाम्भस्स्वबला मताः ।
सामुद्रो गुरुरुष्णरूक्षमधुरः श्लेष्मलो वातहा स्यात्
( श्लेष्माधिको वातहा )
स स्नेहाग्निविवर्धनो ब (ल) करो विष्टम्भकाध्मानकृत् ।
पित्तोद्रेककफात्ययेषु विहितो मेध्योऽतिहृद्यः सदा
विष्टम्भं जनयेच्च शीतपवनव्यापादमत्यग्रतः ॥ ४४ ॥
त्रिदोषशमनो हृद्यः पित्तघ्नः पवनापहः ।
सामुद्रो रोहितः शस्तः सर्व्वरोगेषु दीपनः ॥ ४५ ॥
सामुद्रा गुरवः स्निग्धा मधुरा नातिपित्तलाः ।
उष्णा वातहरा वृष्या वर्चस्याः श्लेष्मवर्धनाः ॥ ४६ ॥
बलावहा विशेषेण मांसाशित्रा (त्वात्) त्समुद्रजाः ।
सामुद्रजेभ्यो नादेयाः स्युर्लघुत्वाद्गुणोत्तराः ॥ ४७ ॥
ततोऽप्यत्यनलत्वाच्च चौद्यकौप्यौ गुणोत्तरौ ।
स्निग्धत्वात्स्वादुपाकत्वात्ततो वाप्या गुणाधिकाः ॥ ४८ ॥

# अथ क्रकरादीनां गुणाः ॥

विष्टम्भाध्मानमेहघ्नः क्रकरः कफवातहृत् ।
मेदःश्लेष्मानिलहरो हिध्माऽऽध्मानविकारहा ॥ ४९ ॥

प्रवरो रोहितो मत्स्यः पित्तघ्नः पवनापहः ।
बृंहणो वातशमनो वातघ्नो दीपनो लघुः ॥ ५० ॥

मत्स्यानां च गुरुः श्रेष्ठो दीपनो वातनाशनः ।
रुचिप्रदः शुक्रकर आश्मरीदोषनाशनः ॥ ५१ ॥ गुरुमत्स्यः ॥

शृङ्गी वातविनाशनो रुचिकरो वृष्यः कफघ्नो मतः
कण्टाको विशदो वृषानलकरो वाते कफे पूजितः ।
पाठीनो बलवृष्यशुक्रजननः श्लेष्माकरो नित्यशः
तस्माद्रोहितको हितो बलकरो वातात्मकः श्लेष्मलः ॥ ५२ ॥

॥ इति मत्स्याः ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते मांसवर्गः ॥

॥ इदानीं व्यायामोद्वर्तनाभ्यङ्गविधिगुणाः कथ्यन्ते ॥

श्रीनारायणतैलचम्पकजपातैलेन चान्येन वा
कार्यं मर्दनकोविदैः क्षितिभुजां मल्लैः सदा मर्दनम् ।
चातुर्जातलवङ्गकुङ्कुमनिशामुस्तासुमांसीभवै-
श्चूर्णो (र्णैः) भृष्टमसूरमुद्गसहितैरुद्वर्तनं कारयेत् ॥ १ ॥

वातघ्नौषधसिद्धेन तैलेनाभ्यज्य मर्दयेत् ।
न रूक्षमर्दनं कुर्यात्तद्धि वातप्रकोपणम् ॥ २ ॥

अधिगतसुखनिद्रः सुप्रसन्नेन्द्रियात्मा
सुलघुजठरवृत्तिर्भुक्तयक्ति दधानः ।
श्रमभरपरिखिन्नः स्नेहसंमर्दिताङ्गः
सवनगुरुमुपेयाद्भूपतिर्मर्दनाय (?) ॥ ३ ॥

अभ्यङ्गः श्रमवातहा बलकरः कायस्य दार्ढ्यावहः
स्यादुद्वर्तनमङ्गकान्तिकरणं मेदःकफालस्यजित् ।
आयुष्यं हृदयप्रसादि वपुषः कण्डूक्लमच्छर्दिकृत् (छेदकृत्)
स्नानादेव यथर्तु सेवितमिदं शीतैरशीतैर्जलैः ॥ ४ ॥

## अथ व्यायामगुणाः ॥

सामर्थ्यं सकलक्रियासु लघुतामङ्गेषु दीप्तिं परां
अग्नेः पाटवमिन्द्रियेषु लघुतां छेदं परं मेदसः ।
उत्साहं मनसः शरीरदृढतां शान्तिं बलाद्व्यापदां
व्यायामः शिशिरे वसन्तसमये कुर्याद्ग्रीष्मे सेवितः ॥ ५ ॥

## अथ व्यायामवर्ज्याः ॥

वातामयः पित्तरुजाऽन्विताश्च
बालोऽतिवृद्धोऽपि कृशोऽतिजीर्णः (प्यजीर्णी) ।
मन्दानलः स्निग्धरसान्नवर्जी
व्यायामकालेषु विवर्जनीयाः ॥ ६ ॥

स्थाल्यां यथाऽनावरणीकृतायां
असंहितायां न च साधुपाकः ।
अनाप्तनिद्रस्य तथा नरेन्द्राः
व्यायामहीनस्य न चानु पाकः ॥ ७ ॥

# अथ पादमर्दनगुणाः ॥

वातव्याधिहरं कफप्रशमनं कान्तिप्रसादावहं
त्वग्वैवर्ण्यविनाशनं रुचिकरं सर्वाङ्गदार्ढ्यप्रदम् ।
अग्नेर्दीप्तिकरं बलोपजननं प्रस्वेदमेदोऽपहं
पद्भ्यां मर्दनमादिशन्ति मुनयः श्रेष्ठं सदा प्राणिनाम् ॥ ८ ॥

# अथ पादमर्दनवर्ज्याः ॥

सुकुमारस्य मन्दाग्नेः किंचित्क्षीणबलस्य च ।
पित्तलस्यापि नो कार्यं कदाचित्पादमर्दननम् ॥ ९ ॥
व्यायामस्विन्नगात्रस्य पद्भ्यां मर्दनितस्य च ।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥ १० ॥
सुवर्णवर्णं कुरुते शरीरं
दृढत्वमङ्गे च ददाति सद्यः ।
सर्वक्रियालाघवमातनोति
संमर्दनं मल्लवरैः कृतं यत् ॥ ११ ॥
वातव्याधिं जयति कुरुते ............ ।
" सर्वपते मम चैष
सग्रस्तस्या स एव समयः क्षुधितो यदैव ॥ १२ ॥
यः क्षौध्यलोभ्यभावेन कुर्यादाह च भोजनम् ।
सुप्तव्यालां निलाव्याधीन् ध्यादीन् सोन्यथा यः प्रबोधतेत् ॥ १३ ॥
यः कोकवन्यमद्राकामि स नक्तं भोक्तुमर्हति ।
संभोक्ता वासरेयश्च रात्रौरेताश्चकोरवत् " (?) ॥ १४ ॥

# अथ भोजननियमाः ॥

हृन्नाभिपद्मसंकोचश्चण्डरोचेरपायतः ।
अतो नक्तं न भोक्तव्यं वैद्यविद्याविदां वरैः ॥ १५ ॥

देवार्चां भोजनं निद्रामाकाशे न प्रकल्पयेत् ।
नान्धकारे च सन्ध्यायां नाविताने निकेतने ॥ १६ ॥

भुक्तौ स्वादे मलोत्सर्गे यः संबाधासमाकुलः ।
निःशङ्कत्वात्ययात्तस्य "कोकनस्यूर्मदापमाः" (?) ॥ १७ ॥

विवर्णास्विन्नविक्लिन्नविगन्धिविरसस्थिति ।
अतिजीर्णमसात्म्यं च नाद्यादन्नं च वारितम् ॥ १८ ॥

## भुक्त्वा वर्ज्यानि ॥

का (भा) सकापोतपायसयानवाहबहुपयः (हृदकम्) ।
भोजनानन्तरं सेव्यं न जातु हितमिच्छता ॥ १९ ॥

## भोजनविधिः ॥

हितं परिमितं पक्वं नेत्रनासारसप्रियम् ।
परीक्षितं च भुञ्जीत न द्रुतं न विलम्बितम् ॥ २० ॥

अत्यशनमध्यशनं
शमनमशतं (समशनविषमाशनं) च संत्याज्यम् ।
" कुर्याद्यच्छोक्तशमनं
बलजीवितपेशलं क्रमशः" (?) ॥ २१ ॥

## भोजनक्रमः ॥

आदौ स्वादु स्निग्धं
तन्मध्ये लवलमलापू (लवणमम्लमु) पभोज्यम् ।
रूक्षं द्रवं च पश्चा-
न्न च भुक्ते भक्षयेत्कचित् किंचित् ॥ २२ ॥

## अग्नेश्चातुर्विध्यम् ॥

मधुस्तिक्तो (मन्दस्तीक्ष्णो) विषमः
समश्च वह्निश्चतुर्विधः पुंसाम् ।
लघु मन्दे गुरुस्तिक्तं (तीक्ष्णे)
त्वद्याद् विषमे समं समेऽप्यद्यात् ॥ २३ ॥

## अथ भोजनसङ्ख्याप्रस्तावः ॥

जीर्यत्यन्नं सुखं भुक्तमेकवारं यदृच्छया ।
द्विकालमपि भुञ्जीत समाग्निस्त्वर्धमात्रया ॥ २४ ॥
कठिनं दुर्जरं यच्च यद्विदाहकरं भवेत् ।
तत्सर्वं निशि वर्ज्यं स्याद् द्रवं लघु च शीलयेत् ॥ २५ ॥

## अथ विषदूषितान्नपरीक्षा ॥

ध्वाङ्क्षः स्वरान् विकुरुतेत्र पिकांत्यकश्च (?)
बभ्रुः शिखंडितनयः प्रभवेत् प्रहृष्टः ।

क्रौञ्चः प्रमोदति विरौति च ताम्रचूडः
छर्दिं शुकः प्रतनुते दहते कपिश्च ॥ २६ ॥
रक्तश्वेते चकोरस्य लोचने विषदर्शनात् ।
गतिश्च लक्षि (स्खलति) हंसस्य लीयन्ते चात्र मक्षिकाः ॥ २७ ॥
यथा लवणसंपर्कात् स्फुटस्फुटति पावकः ।
केषु (विष) दुष्टान्नसंपर्कस्तथा च सुप्रतीयते ॥ २८ ॥
मया सुषेणेन कृतं हिताय
प्राणं प्रसादं तनयेच्च (?) शीघ्रम् ॥

इत्यायुर्वेदमहोदधौ सुषेणकृते भोजनविधिवर्गः ॥

## अथ ताम्बूलगुणाः कथ्यन्ते ॥

कर्पूरकङ्कोललवङ्गपूग-
जातीफलैर्नागरखण्डपर्णैः ।
सुधाऽश्मचूर्णं खदिरस्य सारं
कस्तूरिकाचन्दनचूर्णमिश्रम् ॥ १ ॥
ताम्बूलमेतत्प्रवरं वदन्ति
सौभाग्यदं कान्तिसुखप्रदं च ।
आरोग्यमेधास्मृतिबुद्धिवृद्धिं
करोति वह्नेरपि दीपनं च ॥ २ ॥
अनङ्गसंदीपनभावमध्ये
प्रधानमेतत्समुदाहरन्ति ।

अतो हि सर्व (र्वे) सुखिनो मनुष्या
अहर्निशं प्रीतिकरं भजन्ते ॥ ३ ॥
ताम्बूलपत्राणि हरन्ति वातं
पूगीफलं हन्ति कफप्रसेकम् ।
चूर्णं निहन्यात्कफवातमुच्चै-
र्हन्याच्च पित्तं खदिरस्य सारः ॥ ४ ॥
इत्थं हि ताम्बूलमुदाहरन्ति
दोषत्रयस्यापि निवारणाय ।
अतोऽत्र सेवेत नरः कथञ्चिद्
विचक्षणः प्राकृतमानुषोऽपि ॥ ५ ॥

## अथ ताम्बूलवर्ज्याः ॥

न नेत्ररोगे न च रक्तपित्ते
क्षते च दोषे न विषे न शोषे ।
मदात्यये नापि न मोहमूर्छा-
श्वासेषु ताम्बूलमुशन्ति वैद्याः ॥ ५ ॥

## अथ ताम्बूलकालनियमः ॥

भुक्त्वाऽन्नं सलिलं पीत्वा भुक्त्वा च बहु भोजनम् ।
प्रतीक्ष्य घटिकामेकां ताम्बूलं भक्षयेन्नरः ॥ ६ ॥

## अथ जातीफलगुणाः ॥

वातश्लेष्मप्रशमनं हृद्यं वह्नेश्च दीपनम् ।
मुखवैरस्यहरणं सद्योभुक्तविपाचनम् ॥ ७ ॥
जातीफलं पाचनमग्निदीपनं
कफापहं कण्ठरुजापहं च ।
रसेकदुः (प्रसेकह) श्रेष्ठमजीर्णनाशे
अजीर्णनाम्रु (?) च पथ्यमेतत् ॥ ८ ॥
कलिका दीपनी रुच्या पाके चातितरां हिमा ।
वातपित्तकफान् हन्ति ज्वरच्छर्दिनिबर्हणी ॥ ९ ॥

## अथैलागुणाः ॥

एलाद्वयं छर्दिषु मूत्रकृच्छ्रे
मदे च वै पथ्यमरोचके च ।

## अथ जातिपत्रीगुणाः ॥

स्वादुः सुशीता मधुरा च पाके
अरोचकं हन्ति च जातिपत्री ॥ १० ॥

## अथ क्रमुकपाककालनियमः ॥

ताम्बूलयोग्यं क्रमुकं तु तज्ज्ञा
मासत्रयादूर्ध्वमुदाहरन्ति ।
मासे व्यतीते तु भवन्ति पूर्णा-
न्यतीव हृद्यानि मनोहराणि ॥ ११ ॥

# अथ क्रमुकताम्बूलविशेषाणां गुणविशेषाः ॥

स्थूलं क्रमुकताम्बूलं श्लेष्मलं कृमिवर्धनम् ।
तदन्ते शुक्लवर्णाद्यं श्लेष्मलं कृमिनाशनम् ॥ १२ ॥

## अथ कर्पूरगुणाः ॥

तीक्ष्णोष्णः परिणामशीतलतरः कण्डुप्रमेहापहः
नासाऽऽस्रावजलापहः कृमिहरस्तृट्श्वासकासं जयेत् ।
श्लेष्मघ्नश्च गलग्रहापहरणः संसुप्तजिह्वाऽग्रजित्
कर्पूरः खलु दीप्यसौरभगुणः पित्तामयः स्फाटिकः ॥
गलग्रहे सुप्तजिह्वे नाना श्राव (नासास्राव) जलाधिके ।
श्लेष्ममेहकृमीन् हन्ति कर्पूरश्चाक्षुषोऽपरः ॥
प्रमेहतृड्विदाहघ्नो लक्ष्मीसौभाग्यवर्धनः ॥ १६ ॥

## अथ कस्तूरीगुणाः ॥

कस्तूरी सौरभाढ्या कटुकरसयुता क्षारतिक्ता कषाया
शोकाटोपापहन्त्री कफपवनहरा पित्तकृच्चाक्षुषी च ।
चित्तप्रोल्लासहेतुर्विषमविषगरान् गात्रदौर्गन्ध्यहन्त्री
क्षुत्तृष्णापित्तकोपं प्रशमयति भृशं क्लैब्यशोषं विषं च ॥ १७ ॥

## अथानुलेपनवर्गः ॥

चन्दनं रक्तपित्तघ्नं दाहमूर्छाऽतिसारनुत् ।
शीतलं श्लेष्मलं हृद्यं किंचिद्वातप्रकोपणम् ॥ १८ ॥

पित्तास्रं हरते सदाहदवनं व्यायादयत्तः (?) सदा
मूर्छामोहतृषाविषप्रशमनं दुर्गंधिनिर्णाशनम् ।
कण्डूकुष्ठभगन्दरस्य सदनं मूर्छां छिनत्ति स्फुटं
मेहं कृच्छ्रमपि व्यपोहति सदा दुर्नामनिर्णाशनम् ॥ १९ ॥
रोगानीकविधा व्यपोहति सदा मोषाश्रयः (?) सौरभः ॥
मलयाद्रिर्मोहदोषघ्नो रक्तपित्तनिबर्हणः ।
मूर्छाशोषप्रशमनो वक्त्रदौर्गन्ध्यनाशनः ॥ २० ॥
शीतं पित्तविनाशनं समधुरं किंचित्सतिक्तं तथा
कण्डूशोफविषापहं क्रिमिहरं सौभाग्यकान्तिप्रदम् ।
सौगन्ध्यं कुरुते किमप्यभिनवं गात्रेषु पुष्टिप्रदं
संतोषं विदधाति चेतसि परं स्निग्धं च तृष्णाहरम् ।
ऋतुषु समययोज्यं चन्दनं कुङ्कुमं वा
मृगमदघनलेपः सेव्यते सर्वदैव ।
सुरतकुसुमदामस्फारकर्पूरचूर्णो
विमलधवलवासः सर्वकालोपयोग्यः ॥ २२ ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृतेऽनुलेपनवर्गः ॥

## अथातो वस्त्रगुणाः कथ्यन्ते ॥

श्वेतं दुकूलं विमलं कफवातानुलोमनम् ।
यद्वा सूत्रमयं वस्त्रं त्रिदोषशमनं विदुः ॥

सुश्वेतं तु दुकूलमत्र बलकृत्पित्तप्रशान्तिप्रदम्
ओजोदीप्तिविवर्धनं रतिकरं मर्मातिदाहच्छिदं ।
तृष्णादोषविभेदनं धृतिकरं कान्तिप्रदं श्लेष्मलं
क्षौमं शुक्लमतीव हृद्यममलं पित्तामयध्वंसकम् ॥ २ ॥
माञ्जिष्ठं च विदाहि तत्कफहरं पथ्यं च वातामय-
ध्वंसं चारुतरंसदैव कुरुते श्लेष्मप्रकोपं जयेत् ।
उष्णं शीतविघातकं मलहरं सश्लेष्मवातापहं
विद्याघ...... (?) मयहरं माञ्जिष्ठवस्त्रं सदा ॥ ३ ॥

॥ इत्यायुर्वेदमहोदधौ सुषेणकृते वस्त्रवर्गः समाप्तः ॥

॥ समाप्तोयं सुषेणकृतग्रन्थः ॥

॥ श्रीसाम्बसदाशिवार्पणमस्तु ॥ ॥ शुभं भवतु ॥

॥ श्रीसरस्वत्यै नमः ॥



Sri Venkateswar Printing Works, Kumbakonam.

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | स्थितम् | पाठ्यम् |
|---|---|---|---|
| ३ | १७ | भूम्यूत्खात | भूम्युत्खात |
| ४ | १७ | चौण्डय | चौण्ड्य |
| ५ | ११ | दोष प | दोषं प |
| ६ | २ | ४५ | ४२ |
| ७ | २१ | जीरयत्याशु | जरयत्ययाशु |
| ,, | २२ | ५७ | ५६ |
| १० | १२ | तत्व | तत्त्व |
| ,, | १३ | युत्तया | युक्त्या |
| ११ | १९ | सृक्बल | सृग्बल |
| १३ | १३ | पचितं | पाचितं |
| २० | १३ | विषैः | विशेषैः |
| २६ | १५ | रूषवान् | रूपवान् |
| २९ | ५ | शीतकालेऽग्न | शीतकालेऽग्नि |
| ३० | ५ | षिब | पिब |
| ,, | १२ | तकूर्जका | तक्रकूर्जका |
| ३१ | २ | शातिं | शीतं |
| ,, | ८ | बलाढयं | बलाढ्यं |
| ३२ | १२ | मानुषणां | मानुषाणां |

| पृष्ठे | पङ्क्तौ | स्थितम् | पाठ्यम् |
|---|---|---|---|
| ३८ | ९ | इक्षु | इक्षु |
| ३९ | ५ | वंशवच्छेत | वंशवच्छ्वेत |
| ४१ | ४ | जननछर्दि | जननश्छर्दि |
| ४३ | ८ | पाण्दु | पाण्डु |
| ४४ | ९ | म्त्र | मूत्र |
| ४८ | ३ | कफु | कफ |
| ५६ | १ | कापूरपडीया | कापूरपडीया (भा०) |
| ५८ | १ | मुद्गवटकाः।(भा०) | मुद्गवटकाः |
| ,, | १० | सर्वन्नम् | सर्वमन्नम् |
| ६२ | १२ | हर | हरं |
| ६५ | ११ | अ नालिकेरी | अथ नालिकेरी |
| ८४ | १५ | सुषेणोः | सुषेणो |
| ८९ | १ | मास | मांस |
| ,, | २ | जाङ्गलं | जाङ्गलं |
| ९४ | १४ | भ्यङ्ग | भ्यङ्ग |
| ९५ | २ | यङ्क्ति | यङ्क्ति (?) |
| ९८ | ११ | स ङ्ख्या | सङ्ख्या |